चन्दमामा
सम्पुटः - २१ डिसेम्बर् - २००४ सञ्चिका - १

# एतस्य अङ्कस्य विशेषाः



भल्लूकमान्त्रिकः

१३



उच्चकोटिकं प्रेम (वेतालकथा)

१९



कपिरूपी स्फुरद्रूपी जातः ।

२५



विष्णुपुराणम्

४९



## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, CHENNAI - 600 097
E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १४४/- (बुकपोस्ट द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
**चक्रपाणिः, बि.नागिरेड्डिः च**

# शिक्षाविषये विशेषावधानम्

डिसेम्बर्मासस्य दिनदर्शिका यदि दृश्यते तर्हि तत्र बहवः अन्ताराष्ट्रियदिवसाः दृष्टिगोचराः भवन्ति । विश्वीयम् एड्स्दिनं, दास्यविमुक्तिदिनम्, विकलाङ्गदिनं मानवाधिकारदिनं, पर्यटकदिनम् इत्यादीनि बहूनि दिनानि आचर्यन्ते एतस्मिन् मासे ।

एतेषां सर्वेषाम् अपि आचरणानां केचन सामान्याः उद्देशाः भवन्ति । ते च – व्यक्तेः अधिकारस्य परिरक्षणं, व्यक्तिजीवनस्तरस्य समुन्नयनं, प्रतिदिनं सर्वेऽपि आनुकूल्यभावं यथा आप्नुयुः तथा करणं, बन्धुमित्रादयः सन्तोषेण यथा तिष्ठेयुः तथा प्रयासः, शान्तजीवनयापनम् इत्यादयः ।

एषा आदर्शस्थितिः झटित्येव न सम्पत्स्यते इति तु सत्यम् एव । सर्वकारस्य, तदीयस्य समाजाभिवृद्धिविभागस्य च सर्वविधाः अपि प्रयत्नाः यथाशक्ति सर्वैः प्रोत्साहिताः चेत् एव प्रायः कार्यसिद्धेः वेगः वर्धेत ।

ये विद्यालयं गत्वा औपचारिकं शिक्षणं प्राप्तुम् असमर्थाः जाताः तेषां शिक्षणाय सर्वाः समाजसेवासंस्थाः स्वस्य कार्यजातेषु प्राथम्यं कल्पयेयुः । यदि एतादृशानां शिक्षणं उत्तमतया भवेत् तर्हि महान् एव विजयः साधितः इव, महती सिद्धिः आसादिता इव ।

कैश्चित् सङ्घटनैः एतस्मिन् क्षेत्रे पादार्पणं कृत्वा अत्यल्पे एव काले महती सिद्धिः आसादिता अस्ति अपि । तत्र कारणं – ते अन्यैः अप्रविष्टानि स्थानानि कार्याय चितवन्तः आसन् ।

वर्षम् एतत् समाप्तप्रायम् अस्ति । एतदवसरे सर्वोऽपि बालः विद्यालये उपस्थितः यथा भवेत्, तत्र च सम्यक् अध्ययनं च यथा कुर्यात्, तथा अस्माभिः सर्वैः अपि अवधातव्यम् ।

उपसर्पत् नवं वर्षं नवं हर्षं दद्यात् इति आशास्महे वयम् ।

*सम्पादकः* – **विश्वम्**

# रजतदीपः

हेमपुरस्य न्यायालये रजतदीपसम्बद्धः कस्यचन अभियोगस्य विचारणा प्रचलति स्म । केशवनामकस्य गृहे रजतदीपस्य चौर्यं प्रवृत्तम् आसीत् । केशवः न्यायाधीशम् अवदत् – ''आर्य ! श्रावणशुक्रवासरे मम पत्नी व्रतस्था सती काश्चन गृहिणीः गृहं प्रति निमन्त्रितवती आसीत् । व्रतसमाप्त्यनन्तरं सर्वासां निर्गमनात् परं तया ज्ञातं यत् गृहे रजतदीपस्य चौर्यं प्रवृत्तम् अस्ति इति । एतत् चौर्यं माधवस्य पत्नी गुणवती एव कृतवती अस्ति'' इति ।

तदा न्यायाधीशः अपृच्छत् – ''माधवस्य पत्नी गुणवती एव एतत् चौर्यं कृतवती इत्यत्र किं प्रमाणम् ?'' इति ।

''सप्ताहात् पूर्वं गुणवत्याः गृहे एकं शुभकार्यम् आसीत् । तदर्थं मम पत्नी तस्याः गृहं गतवती आसीत् । पूजासमये तत्र स्थापितः दीपः मम पत्न्या अभिज्ञातः । कृपया दीपं मह्यं दापयतु'' इति अवदत् केशवः ।

''सः दीपः भवतः एव इत्यत्र किं प्रमाणम् ?'' इति न्यायाधीशः अपृच्छत् ।

''अस्मद्गृहस्य दीपः विशिष्टः अस्ति । तदुपरि 'ॐ' इति लिखितम् अस्ति'' इति उत्तरं दत्तवान् केशवः ।

तदा न्यायाधीशः पुनः अवदत् – ''मम गृहे अपि तादृशः एव दीपः अस्ति खलु !'' इति ।

''तदेव मया अपि वक्तुम् इष्टम् आसीत् । माधवस्य पत्नी मम गृहात् यं दीपं चोरितवती तं भवतः पत्न्यै विक्रीतवती इति श्रूयते । अतः सः दीपः इदानीं भवतः गृहे अस्ति'' इति अवदत् केशवः ।

एतत् श्रुत्वा न्यायाधीशः, तत्रत्याः अन्ये च आश्चर्येण स्तब्धाः जाताः ।





# गोवर्धनस्य चयनप्रक्रिया

गोवर्धनः धनिकेषु अग्रगण्यः । तस्य शतैकर्परिमिता भूमिः कृषियोग्या आसीत् । तेन सह सः चतुर्विधवाणिज्यमपि करोति स्म । अतः तस्य सर्वस्य पर्यवेक्षणाय, तेन उक्तं कार्यं कर्तुं, तस्य सर्वस्मिन् कार्ये तेन सह साहाय्यार्थं च कश्चन योग्यः सहायकः आवश्यकः आसीत् ।

'कश्चन सहायकः गोवर्धनेन अपेक्ष्यते' इति वार्तां श्रुत्वा सीतारामः, भीमः, राजगोपालः चेति त्रयः तरुणाः आगताः ।

गोवर्धनः आगतेषु त्रिषु सीतारामं प्रथमम् आहूतवान् । सीतारामस्य गृहस्थित्यादिविषये पृष्टवान् च । सीतारामः स्वस्य विषयं सविनयम् उक्तवान्– ''अहं विद्यावान् । महान् परिवारः मम । अतः कश्चन उद्योगः आवश्यकः । भवता यानि कार्याणि उच्यन्ते तानि श्रद्धया अहं करिष्यामि'' इति ।

''भवता होशियारपुरे स्थितः धर्मराजः द्रष्टव्यः । सः उत्तमः पाचकः ! तस्मात् भवान् तां पाकविद्याम् अभ्यस्य आगच्छतु'' इति उक्तवान् गोवर्धनः ।

''मम सर्वेषु कार्येषु कश्चन सहायकः आवश्यकः इति भवतः अपेक्षा आसीत् । किन्तु इदानीं पाकविद्याविषयं वदन् अस्ति खलु भवान् ! आश्चर्यं जायमानमस्ति मम'' इति उक्तवान् सीतारामः ।

''अत्र आश्चर्यकरं किम् अस्ति ? सर्वदा गृहे कृतम् पाकमेव खादामि । किन्तु कार्य-निमित्तं यदा बहिः गच्छामि तदा मम पत्नी मया सह आगन्तुं न शक्नोति । तादृशे अवसरे मम कस्यचन पाचकस्य आवश्यकता भवति'' इति उक्तवान् गोवर्धनः ।

''अहं पाकं कर्तुं न जानामि । किन्तु केषुचित् एव दिनेषु पाककार्यं ज्ञातुं मम कौशलं तु अस्ति एव । तदर्थं होशियारपुरपर्यन्तं गमनं नावश्यकम् । मम माता समीचीनं पाकं जानाति । तस्याः सकाशात् एव अहं पाककलां ज्ञास्यामि'' इति उक्तवान् सीतारामः ।



''अन्ये अतिरुचिकरं पाकम् एव कुर्युः नाम, तथापि धर्मराजेन कृते पाके एव अधिकरुचिः अस्ति इति मम तु भावना। अपि च धर्मराजात् अवगन्तव्यः अन्योऽपि विषयः अस्ति यत् सः परितः यानि पाकवस्तूनि लभ्यन्ते तैरेव रुचिकरं पाकं कर्तुं समर्थः । जलं विना, अग्निं विना, लवणं विना वापि रुचिकरं पाकं कर्तुमपि सः समर्थः एव । अतः धर्मराजतः ये पाकशिक्षणं प्राप्नुवन्ति ते समुद्रे मरुभूमौ अन्यत्र यत्रकुत्रचित् वा पाकविषये समस्यां न अनुभवन्ति'' इति गोवर्धनः सविश्वासम् उक्तवान् ।

गोवर्धनस्य वचनैः सीतारामे नैराश्यम् अजायत । तेन उक्तम् - ''महोदय ! भवत्तः अहम् अनेकाः विद्याः ज्ञात्वा योग्यः महापुरुषः भवेयम् इति मम चिन्तनम् आसीत् । किन्तु भवान् तु मादृशं न इच्छति, अपि तु कश्चित् पाचकम् अपेक्षते'' इति ।

''भवान् महापुरुषः भवतु इत्येतदर्थं मया भवान् न आहूतः'' इति वदन् गोवर्धनः सीतारामं सम्प्रेष्य भीमम् आहूतवान् ।

भीमः स्वपरिचयं वदन् - ''अहं विद्यावान् अस्मि । कठिनम् अपि कार्यम् अहं सलीलं करिष्यामि । बहवः धनिकाः माम् आहूतवन्तः कार्यकरणाय । किन्तु भवतः या प्रसिद्धिः अस्ति सा माम् अत्रैव आगन्तुं प्रेरितवती । अतः भवतः समीपे कार्यं कर्तुम् अहम् आगतः अस्मि'' इति उक्तवान् ।

तदा गोवर्धनः यानि वाक्यानि सीतारामं श्रावितवान् तानि वाक्यानि एव भीममपि उक्तवान् । भीमः तत् श्रुत्वा महता उत्साहेन - ''पाककार्ये अहं निपुणः । गृहे मम मातुः अस्वास्थ्यसमये मया एव पाकः क्रियते । धर्मराजात् अपि यदि अहं शिक्षणं प्राप्नुयां तर्हि इतोऽपि स्वादुं पाकं कर्तुं शक्नुयाम्'' इति उक्तवान् ।

गोवर्धनः अस्मिन् विषये असहनां प्रकटयन् उक्तवान् - ''धर्मराजः तु तस्मै एव शिक्षणं दास्यति येन पूर्वं पाकविषयः किञ्चिदपि न ज्ञातः । अतः भवन्तं सः न बोधयेत्'' इति ।

भीमः झटिति उक्तवान् - ''स्वामिन् । मया पाकविषयः ज्ञातः अस्ति इति अहं तं न वदिष्यामि एव । तदा अवश्यम् एव सः मां पाककलां पाठयेत्'' इति ।

''सत्यांशः भवता न ज्ञातः । यः पाककरणं किञ्चिद् वा जानीयात् सः धर्मराजेन पाठ्यमानं पाकशास्त्रस्य कौशलं ज्ञातुं न

प्रभवेद् एव'' इति उक्तवान् गोवर्धनः ।

तदा भीमः दैन्येन उक्तवान् – ''महोदय, मयि सामर्थ्यमस्ति इति दर्शयितुं मया असत्यम् उक्तम् । यदि मह्यं भवता उद्योगः दास्यते तर्हि मया निष्कपटतया कार्यं करिष्यते'' इति ।

गोवर्धनः स्वस्य अनङ्गीकारं सूचयन् – ''भवता मयि सदभिप्रायः नोत्पादितः । आरम्भे एव यदि भवान् सत्यं कथितवान् स्यात् तर्हि प्रायः उद्योगं प्राप्तवान् अभविष्यत् । किन्तु इदानीं सः अवसरः नष्टः'' इति उक्त्वा भीमं प्रेषितवान् ।

ततः राजगोपालनामकं सः आहूतवान् । राजगोपालः अपि स्वपरिचयादिकम् उक्त्वा – ''महोदय ! अहं दरिद्रः । किमपि कार्यं मया इतः पूर्वं श्रद्धया न कृतम् । यतः अहं भीतः भवामि स्म यत् यदि श्रद्धया कार्यं कुर्यां तर्हि कदाचित् अधिकानि कार्याणि मया करणीयानि भवेयुः इति । अनेनैव कारणेन कोऽपि मां कार्यं न वदति । इदानीं मम गृहस्य दायित्वं मम अग्रजस्य, तत्पत्न्याः च अस्ति । तौ उभावपि माम् अप्रयोजकं मत्वा गृहात् निष्कासितवन्तौ । वञ्चनामार्गम् आश्रित्य मया कानिचन दिनानि यापितानि । किन्तु सत्यांशः यदा जनैः ज्ञातः अभवत् तदा ते मां प्रेषितवन्तः । जीवननिर्वहणाय चौर्यमपि मया कृतम् । तेन कारागृहवासोऽपि अनुभूतः । कारागृहे मया पाकशास्त्रम् अधीतम् । मम व्यवहारेण सन्तुष्टाः कारागृहाधिकारिणः मां पूर्वमेव विमुक्तं कृतवन्तः । किन्तु कारागृहात् आगतं मां सर्वेऽपि चोरमेव भावयन्ति । कोऽपि मह्यम् उद्योगं दातुं न सिद्धः । भवान् दयालुः




अस्ति । यदि मह्यम् अवकाशः दीयेत तर्हि अवश्यम् अहं भवतः विश्वासपात्रतां प्राप्नुयाम्'' इति उक्तवान् ।

सर्वं श्रुतवान् गोवर्धनः तमपि धर्मराजविषयं श्रावयित्वा अवदत् – ''भवता पूर्वमेव पाकशास्त्रं ज्ञातमस्ति । अतः धर्मराजः भवन्तं पाकविद्यां न बोधयेत् । अपि च असत्यविषयम् अहं नेच्छामि । अतः भवते उद्योगं दातुं न शक्नोमि । अपि च भवता चौर्यं कृत्वा दण्डनमपि प्राप्तम् । अतः भवते उद्योगदानं न समीचीनमिति भावयामि । मम अभिप्रायः समीचीनः किल ?'' इति ।

तदा राजगोपालः अवदत् – ''स्वामिन् ! धर्मराजस्य पाकः कीदृशः भवति इति भवान् जानाति । अहं धर्मराजस्य पाकतः अपि उत्तमं पाकं कर्तुं शक्नुयाम् । यदि मम पाकः रुचिकरः

न इति भवान् चिन्तयेत् तर्हि मां कार्यात् निष्कासयतु । असत्यकथनं नेच्छामि इति उक्तवान् भवान् । कानिचन दिनानि कार्यं कर्तुं मह्यम् अवकाशं ददातु । तेषु दिनेषु एकमपि असत्यं मया उक्तं चेत् माम् उद्योगात् निष्कासयितुम् अर्हति भवान् । एक अवकाशः मह्यं दीयताम् इति मम प्रार्थना'' इति ।

गोवर्धनः किञ्चित् कालं चिन्तयित्वा तस्मै उद्योगस्य दानम् अङ्गीकृतवान् । एषा वार्ता यदा गोवर्धनस्य पत्न्या ज्ञाता तदा सा भीता सती पत्युः समीपम् आगत्य उक्तवती – ''योग्यकुलात् आगताय सीतारामाय उद्योगः न दत्तः । सज्जनः भीमः अपि भवता तिरस्कृतः । किन्तु इदानीं तादृशाय उद्योगं दत्तवान् अस्ति भवान्, यः कश्चन चोरः वञ्चकः असत्यवादी च आसीत् । तादृशः अस्माकम् अहितं न करोति इत्यत्र कः विश्वासः ?'' इति

तदा गोवर्धनः पत्नीं सान्त्वयन् उक्तवान् – ''सीतारामः सज्जनः एव । किन्तु मया सह वसन् सः सर्वं ज्ञात्वा स्वतन्त्रः भवितुम् इच्छन् इतः अन्यत्र गच्छेत् । भीमस्तु स्वार्थसम्पादनाय असत्यं वक्तुमपि सिद्धः । अतः तौ उभावपि मया निराकृतौ । तृतीयः एषः राजगोपालः अपराधं कृतवान् आसीत् इति तु सत्यम् एव । किन्तु सः तस्य फलरूपेण कारागृहवासमपि अनुभूतवान् । कारागृहस्य अधिकारिणः अस्मिन् आगतं परिवर्तनं दृष्ट्वा एव निर्धारितात् समयात् पूर्वमेव एतं विमुक्तं कृतवन्तः । एषः किमपि अगोपयन् सर्वमपि माम् उक्तवान् अस्ति । एतत् एव मम अङ्गीकारस्य कारणम् । तस्य सत्यकथनमेव तदीयायाः निष्कपटतायाः द्योतकम् । मम विश्वासपात्रतां प्राप्तुं सः योग्यः इति मम भावना । मम एषः निर्णयः कथमपि अन्यथा न भविष्यति इति अस्ति मम विश्वासः । अपि च एषा एव मानवीयता अपि । यदि अहं तस्मै उद्योगं न दद्यां तर्हि तादृशाय उद्योगं दातुम् अन्यः कोऽपि सिद्धः न भवेत् । अतः एव उद्योगः दीयते मया । एतेन सः अस्माकं गृहे चिरकालं स्थातुं प्रयत्नमपि कुर्यात्'' इति ।

गोवर्धनस्य पत्नी पत्युः विचारं योग्यमिति भावितवती । राजगोपालः स्वस्य व्यवहारेण गोवर्धनस्य विश्वासपात्रतां सम्पादितवान् ।





# भल्लूकमान्त्रिकः

## १२

[राज्ञः दुर्मुखस्य दुर्गं वशीकृतवान् सामन्तः वधकभल्लूकादीनां ग्रहणाय स्वस्य सैनिकान् प्रेषितवान् । लुण्ठाकः नागमल्लः उक्तवान् यत् अहं दुर्मुखराजं बन्दीकृत्य आनीतवान् अस्मि इति । एतत् ज्ञात्वा सामन्तः वधकभल्लूकसमीपम् आगतवान् । क्रुद्धः दुर्मुखराजः सामन्तस्य उपरि अभिपतितवान् । तस्मात् सामन्तः पलायनरतः जातः । तदनन्तरम् ... ]

सामन्तराजः स्वस्य अश्वस्य वेगं वर्धितवान् । अनुसृत्य आगच्छतः दुर्मुखराजस्य सम्मुखीकरणविचारं परित्यज्य दुर्गद्वारं प्रति अश्वं प्रेरितवान् आसीत् सः । शत्रुं दृष्ट्वा धावतः राजानं दृष्ट्वा सेनापतिः अपि सैनिकान् आज्ञापितवान् यत् सर्वैः युद्धं स्थगयित्वा प्रतिगन्तव्यम् अविलम्बेन इति ।

तदा उभौ सैनिकौ तम् अवदताम् - ''श्रीमन् ! शत्रुसैनिकाः दशाधिकाः अपि न सन्ति । एतेषां संहारः न महते क्लेशाय । अत्रान्तरे प्राचीनः राजा नूतनराजः च परस्परकलहेन मरणं प्राप्नुतां नाम । तयोः मरणं जातं चेत्, शत्रुवः निगृहीताः च चेत् भवतः मार्गः निष्कण्टकः भविष्यति । तदा भवान् एव उदयगिरेः सिंहासनम् आरोढुम् अर्हति'' इति ।

सैनिकयोः एतस्य वचनस्य श्रवणात् सेनापतेः मनसि सिंहासनारोहणलोभः उत्पन्नः । सः प्रतिगमनं स्थगयित्वा गजस्य उपरि उपविष्टान् वधकभल्लूकादीन् अपश्यत् । तदा





वधकभल्लूकः परशुम् उन्नीय नागमल्लं, तस्य अनुचरौ, दुर्मुखस्य अङ्गरक्षकं च दृष्ट्वा एव जागरूकतास्थितिं स्मारयन् उच्चस्वरेण अवदत् - ''दुस्साहसम् अवलम्बमानः राजा दुर्मुखः शत्रुसमूहस्य मध्यम् एकाकितया गच्छन् स्वस्य प्राणानाम् अपायं स्वयं स्वागतीकृतवान् अस्ति । एतस्मात् न राज्यं, प्रत्युत प्राणवियुक्तिः एव प्राप्तव्या भवेत् । एतदवसरे यः शत्रुः अस्माकं समीपम् आगच्छति तस्य शिरः निर्दयं कर्तयिष्यामः वयम् । राज्ञः दुर्मुखस्य रक्षणाय स्थितः एकमात्रोपायः अयम् एव'' इति ।

उग्रदण्डः अपि स्वस्य शिलागदाम् उन्नीय घोरं गर्जनं कृत्वा अवदत् - ''अये, सामन्तस्य सूर्यभूपतेः सैनिकाः ! सावधानाः भवन्तु भवन्तः । यदि राज्ञः दुर्मुखस्य कोऽपि अपायः भवेत् तर्हि मम एषा गदा भवतः सर्वेषां शिरः चूर्णीकरिष्यति'' इति ।

तदनन्तरं वधकभल्लूकः, राक्षसः उग्रदण्डः च अग्रे गमनाय उद्युक्तौ । एतत् दृष्टवान् सेनापतिः सिंहासनप्राप्तिस्वप्नं परित्यज्य अश्वं दुर्गस्य दिशि प्रेरयन् सैनिकान् उद्दिश्य - ''गदा हस्तस्य घोर-राक्षसस्य, परशुधारिणः एतस्य वधकभल्लूकस्य च सम्मुखीकरणं सर्वथा असाध्यम् । इदानीं दुर्गम् एकम् एव अस्माकं प्राणान् रक्षितुम् अर्हति । अतः वयं झटिति दुर्गं प्रविश्य दुर्गद्वारस्य पिधानं करवाम'' इति उक्त्वा पलायनम् आरब्धवान् ।

वधकभल्लूकः, नागमल्लः, अङ्गरक्षकः इत्यादयः यावत् दुर्गद्वारसमीपम् आगताः तावता कैश्चित् सैनिकैः सह दुर्गस्य अन्तः गतवान् सामन्तः झटिति दुर्गद्वारं पिहितवान् आसीत् । सामन्तस्य अवशिष्टाः सैनिकाः किञ्चिदनन्तरम् आगताः । दुर्गद्वारं पिहितं दृष्ट्वा हाहाकारं कुर्वन्तः ते इतस्ततः पलायनम् आरब्धवन्तः ।

उग्रदण्डः दुर्गद्वारस्य समीपम् आगत्य तत् पिहितं दृष्ट्वा क्रोधेन शिलागदया तत् प्रहृतवान् । तेन किमपि प्रयोजनं न सिद्धम् । सः वधकभल्लूकम् अवदत् - ''वधकभल्लूक ! सामन्तः भीरुः स्यान्नाम । तथापि तस्य चातुर्यं तु श्लाघनीयम् एव । अतः उपायेन सः आत्मरक्षणं चिन्तितवान् । इदानीं किं करणीयम् अस्माभिः ? राजा दुर्मुखः दुर्गस्य अन्तः गत्वा एककितया शत्रूणां मध्ये स्थितवान् अस्ति । सः स्वस्य प्राणान् कथमपि रक्षेत् नाम । अतः तद्विषये चिन्ता नास्ति

मम । मम तु चिन्ता - भवान् तस्य शिरः कथं भल्लूकमान्त्रिकाय दातुम् अर्हेत् इति'' इति ।

राक्षसस्य मुखात् एतत् वचनं श्रुत्वा वधकभल्लूकः सकृत् आपादमस्तकं कम्पनयुक्तः जातः । 'यदि राज्ञः दुर्मुखस्य शिरः मया न नीयेत तर्हि आजीवनं मया भल्लूकरूपेणैव स्थातव्यं भवेत् । येन मया अद्यावधि मानवजीवनं कृतं तेन मया इतः परम् अरण्ये निवसता मध्वादिकं खादता वन्यजीवनं यापनीयं भवेत् । एतोऽपि घोरतरः अभिशापः कः अन्यः भवितुम् अर्हति मम जीवने ?' इति अचिन्तयत् सः ।



'मया कथमपि राज्ञः दुर्मुखस्य प्राणाः रक्षणीयाः एव' इति सङ्कल्प्य 'जयतु शिरीषभैरवः !' इति सकृत् उद्घोष्य स्वस्य समग्रां शक्तिम् उपयुज्य सः दुर्गद्वारं प्रहृतवान् । द्वारं तु सुदृढम् आसीत् । अयःपट्टिकया कीलितम् अपि आसीत् । अतः वधकभल्लूकस्य प्रहारतः द्वारं कम्पितम् अपि न जातम् । तस्य हस्ते स्थितः परशुः हस्तात् च्युतः सन् दूरे अपतत् !

गजस्य उपरि स्थितवान् भिल्लयुवकः एतत् दृष्ट्वा गजात् अवतीर्य पतितं परशुम् उन्नीय वधकभल्लूकाय यच्छन् अवदत् - ''श्रीमन् ! कोपावेशात् एतस्य परशोः नाशनं न उचितम् । एषः भल्लूकमान्त्रिकेण अभिमन्त्र्य खलु दत्तः ? यदि दुर्गस्य अन्तः गन्तव्यं तर्हि तदर्थं सरलः मार्गः नाम एतस्य द्वारस्य दाहनम् । अतः तदर्थं प्रयासः भवतु'' इति ।

''भवतः एषा सूचना तु युक्ता एव अस्ति । किन्तु एतदर्थं कालः कश्चन आवश्यकः एव । किन्तु एतदभ्यन्तरे यदि सामन्तभूपतिः राज्ञः दुर्मुखस्य वधं कुर्यात् तर्हि मम का गतिः भवेत् ? एषः अंशः अपि चिन्तनीयः एव खलु अस्माभिः ?'' इति अवदत् वधकभल्लूकः ।

''भवतः कथनं युक्तम् एव अस्ति'' इति उक्त्वा राक्षसः उग्रदण्डः शिलागदाम् उन्नीय कानिचन पदानि पृष्ठतः गत्वा, ततः वेगेन अग्रे गत्वा गदया द्वारं बलात् सकृत् प्रहृतवान् ।

राक्षसस्य एतेन शिलागदाप्रहारेण दुर्गस्य द्वारपार्श्वस्थः भागः शिथिलः जातः, काचित् महाशिला भूमौ पतिता च । एतस्मात् सर्वे कानिचन पदानि पृष्ठतः गतवन्तः । सर्वेषां दृष्टिः दुर्गभित्तेः ऊर्ध्वभागे पतिता ।

तत्र यत् दृष्टं ततः सर्वे विस्मिताः मूकाः च जाताः । दुर्गभित्तेः उपरि कृष्णवेषं धृतवान्



कश्चन महावानरः दृष्टः तैः । तस्य महा-वानरस्य हस्ते कश्चन मन्त्रदण्डः आसीत् । मन्त्रदण्डस्य अग्रभागे वज्रखचितं भल्लूकमुखं विराजते स्म ।

वानरस्य हस्ते स्थितं मन्त्रदण्डं दृष्ट्वा नितरां क्रुद्धः वधकभल्लूकः उच्चस्वरेण अवदत् - ''अये ! किं भवान् वस्तुतः अपि वानरः एव उत कोऽपि पिशाचः ? महाशक्तिशालिनः भल्लूकमान्त्रिकस्य मन्त्रदण्डः भवतः हस्ते कथम् आगतः ? शीघ्रम् उत्तरं वदतु । अन्यथा ...'' इति ।

एतत् श्रुत्वा सः वानरः कर्कशस्वरेण अपृच्छत् - ''अये ! भल्लूकरूपधारिन् ! भवान् वस्तुतः अपि भल्लूकः, उत कश्चन पिशाचः ?'' इति ।

एतेन क्रुद्धः वधकभल्लूकः तं वानरं लक्ष्यी-कृत्य स्वस्य परशुं क्षेप्तुम् उद्युक्तः । तदा तं ततः निवारयन् उग्रदण्डः मन्दस्वरेण अवदत् - ''वधकभल्लूक ! भवान् अविवेकेन व्यव-हरन् अनर्थं मा उत्पादयतु । मम तु भाति यत् भल्लूकमान्त्रिकः कस्मिंश्चित् अपायगर्ते पतितः अस्ति इति । अतः एतस्मात् वानरात् वयम् आदौ जानीयाम यत् वस्तुतः किं प्रवृत्तम् इति । तदनन्तरं यथोचितं निर्णयाम'' इति ।

तदा वधकभल्लूकः हस्ताभ्यां कर्णौ पिधाय अवदत् - ''उग्रदण्ड ! एतेन वराकेण मर्कटेन सह वार्तालापात् न किमपि प्रयोजनम् । दुर्गस्य अन्तः स्थितः राजा दुर्मुखः जीवति उत न इति न ज्ञायते मया । यदि दुर्गस्य द्वारं भञ्जयितुं न शक्येत तर्हि तत् दग्ध्वा वा अन्तः गन्तव्यम् । एतद्विषये आदौ चिन्तनीयम्'' इति ।

''वधकभल्लूक ! अद्यावधि वस्तुस्थितिः भवता न अवगता इति भाति । आत्मानं मायामर्कटं वदन् एषः भल्लूकमान्त्रिकस्य मन्त्र-दण्डं प्राप्तवान् अस्ति इत्यस्य तात्पर्यं किम् ? प्रायः भल्लूकमान्त्रिकः इदानीं न जीवति । एवं स्थिते किं दुर्मुखविषये चिन्तनेन ? आगच्छतु मया सह । अरण्ये कुत्रचित् वसन्तौ आवां तत्रैव शेषजीवनम् निश्चिन्ततया यापयाव'' इति निर्वेदमिश्रितेन स्वरेण अवदत् उग्रदण्डः ।

''वधकभल्लूकवर्य ! उग्रदण्डवर्यः यत् वदति तत् युक्तम् एव अस्ति'' इति वदन् गजात् अवतीर्य अनुचरौ अङ्गरक्षकं च 'गजात् अवतरणं क्रियताम्' इति संसूच्य नागमल्लः भल्लूकमान्त्रिकं पुनः अवदत् - ''राक्षसस्य उग्रदण्डस्य कथनं नितरां समीचीनम् इति भाति । यदि वयं सर्वे अरण्ये सङ्घटितशक्त्या

निवसेम तर्हि अस्माकं गणः शक्तियुक्तः भवेत् । तदा यात्रिकाणां लुण्ठनं लीलया कुर्वन्तः सुखेन जीवितुं शक्नुयाम वयम्'' इति ।

एतत् श्रुत्वा वधकभल्लूकः नेत्रे रक्तीकृत्य – ''अये भिल्लसहचर ! एषः नागमल्लः इतः पलायनं यथा न कुर्यात् तथा एतस्मिन् विशेष-दृष्टिः भवतु भवतः'' इति उक्त्वा सर्वान् उद्दिश्य अवदत् – ''अहं भल्लूकमान्त्रिकस्य साहसशीलस्य कालीवर्मणः च अन्वेषणं कर्तुम् इच्छामि । भवत्सु ये ये मया सह आगन्तुम् इच्छन्ति ते सर्वे हस्तम् उन्नयन्तु नाम'' इति ।



तदा राक्षसात् उग्रदण्डात् ऋते, अन्ये सर्वे अपि हस्तम् उन्नीतवन्तः । एतत् दृष्ट्वा भिल्ल-युवकः सन्देहेन वधकभल्लूकम् अपृच्छत्– ''श्रीमन् ! एते नागमल्लादयः अस्माभिः सह आगमनम् अङ्गीकुर्वन्तः सन्ति । किन्तु एतेषु वयं कथं विश्वासं कुर्याम ?'' इति ।

''यदि ते विश्वासभङ्गम् आचरेयुः तर्हि अहं तेषां शिरः निर्दयं कर्तयिष्यामि । उग्र-दण्ड ! भवतः कः निर्णयः ? भल्लूकमान्त्रिक-समीपे मम किमपि कार्यम् अस्ति इति भवान् पूर्वम् उक्तवान् आसीत् खलु ?'' इति अपृच्छत् वधकभल्लूकः ।

'मान्त्रिकः सजीवं तिष्ठति चेदेव मम कार्यं सम्पद्यते'' इति गम्भीरस्वरेण अवदत् उग्र-दण्डः ।

अत्रान्तरे दुर्गभित्तेः उपरि स्थितः माया-मर्कटः उच्चस्वरेण अवदत् – ''अहो, दुर्गस्य अन्तः युद्धम् आरब्धम् अस्ति ! केचन सैनिकाः पूर्वतनस्य राज्ञः दुर्मुखस्य पक्षं समर्थयन्तः सन्ति । अन्ये केचन सामन्तस्य सूर्यभूपतेः पक्षम् आश्रितवन्तः सन्ति । सूर्य-भूपतिः दुर्मुखः च प्रत्यक्षं युद्धम् अकुर्वन्तौ स्तम्भस्य पृष्ठतः स्थित्वा स्वपक्षीयान् युद्धाय प्रेरयन्तौ स्तः !'' इति ।

एतत् श्रुत्वा वधकभल्लूकः – ''उग्रदण्ड ! दुर्मुखः सजीवं ग्रहीतुं शक्यः इति विश्वासः मयि उत्पन्नः अस्ति । देवो दयालुः ! एतस्मात् भल्लूकरूपात् अचिरात् एव मम मुक्तिः भवेत् अपि'' इति अवदत् ।

तदा असन्तोषं प्रकटयन् उग्रदण्डः गदया भूमिं सकृत् घट्टयित्वा अवदत् – ''अये वधक-भल्लूक ! भवान् पुनरपि तमेव प्राचीनं रागम् आलापयन् अस्ति खलु ? भल्लूकमान्त्रिकस्य सजीवस्थितौ एव सन्देहः मम । यदि सः सजीवं तिष्ठेत् तर्हि तस्य मन्त्रदण्डं को वा

अपहर्तुं शक्नुयात् ?'' इति ।

ततः सः करताडनेन मायामर्कटस्य अवधानम् आकृष्य अपृच्छत् - ''अये मायामर्कट ! महामान्त्रिकस्य मन्त्रदण्डः भवता आनीतः इति तु युक्तम् एव । मान्त्रिकस्य शवः कुत्र गतः ? सः कुत्र स्थापितः भवता ?'' इति ।

''अहं तस्य शवं खण्डशः कर्तयित्वा काकादिभ्यः अर्पितवान् । किन्तु कोऽपि जीवी तं यथा न स्पृशेत् तथा कालीवर्मा रक्षणं करोति'' इति वदन् मायामर्कटः मन्त्रदण्डं दुर्गभित्तेः उपरि स्थापितवान् ।

ततः सः दूरे दृष्टिं प्रसार्य अवदत् - ''अहो, सः दुष्टः भल्लूकमान्त्रिकः कामपि सञ्जीविनीविद्याम् अवलम्ब्य सजीवः जातः अस्ति ! सः महिषम् आरुह्य इतः एव आगच्छन् अस्ति । तेन सह अश्वम् आरूढवान् कालीवर्मा अपि आगच्छन् अस्ति । तयोः ग्रहणाय चन्द्रशिलाराज्यस्य मन्त्री ससैन्यम् आगच्छन् अस्ति । तयोः शिरश्छेदं दृष्ट्वैव अहम् इतः गमिष्यामि, न अन्यथा'' इति ।

मायामर्कटस्य एतानि वचनानि श्रुत्वा नितरां क्रुद्धः वधकभल्लूकः 'जय शिरीषभैरव !' इति सकृत् उद्घोष्य अवदत् - ''अये व्यर्थप्रलापिन् वानर ! किमेतत् उच्यते भवता ? उन्मत्तः तु न स्यात् खलु भवान् ? किं भवान् अस्मान् सर्वान् भ्रष्टमतीन् कर्तुम् इच्छति ?'' इति ।

यावत् वधकभल्लूकस्य वचनं न समाप्तं तावता अश्वम् आरूढवान् कालीवर्मा वेगेन तत्र आगतवान् । महिषम् आरूढवान् भल्लूकमान्त्रिकः अपि अनन्तरक्षणे तत्र उपस्थितः । दुर्गभित्तेः उपरि स्थितं मायामर्कटं दृष्ट्वा सः अवदत् - ''अये वधकभल्लूक ! मम मन्त्रदण्डं चोरितवन्तम् एतं मायामर्कटं गृह्णातु कथमपि । एषः कथमपि संहरणीयः एव अस्माभिः'' इति ।

अनन्तरक्षणे एव सः मायामर्कटः कीच्कुर्वन् उच्चैः अहसत् । कूर्दनं कृत्वा दुर्गस्य अन्तर्भागम् अगच्छत् च ।

- *(अनुवर्तते)*



# वेताल-कथा

## उच्चकोटिकं प्रेम

कार्यं कथं साधनीयम् इति पुनः पुनः चिन्तयन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन्! भवता महान् परिश्रमः क्रियते, महत् कष्टं च अनुभूयते, तथापि साफल्यं तु न प्राप्यते। एवं स्थिते अपि भवतः कार्यसाधनेच्छा तु न क्षीणा। एवं करिष्यते इति कस्मै वचनं दत्तम् अस्ति भवता? साधकबाधकादिकं विचार्य वचनं दत्तं किम्? अन्यथा भवता महत् कष्टम् अनुभोक्तव्यं भवेत्। पूर्वं चन्दनेन तादृशी एव स्थितिः अनुभूता। भवतः जागरणाय




मार्गायासपरिहाराय च तस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

भाग्यनाथः श्वेताश्वनामकस्य गन्धर्वराजस्य आस्थाने उद्योगं करोति स्म । सः सुप्रियानामिकायाम् अप्सरसि अनुरक्तः आसीत् । कदाचित् सुप्रिया दन्तनिर्मिताम् एकां पेटिकां तस्मै दत्त्वा अवदत् – ''श्वेताश्वस्य कोषागारे स्थितैः अमूल्यैः रत्नैः एतत् प्रपूर्य आनयतु । तदा अहं भवन्तं परिणेष्यामि'' इति ।

भाग्यनाथः स्वामिनं श्वेताश्वम् एतम् अंशम् अवदत् । श्वेताश्वः किञ्चित् विचिन्त्य अवदत् – ''मम कोषागारे स्थितैः रत्नैः अहं भवन्तं प्रहरिष्यामि । यावतां प्रहारः भवता सह्यते तावन्ति रत्नानि भवतः एव भविष्यन्ति'' इति ।

भाग्यनाथः एतत् अङ्गीकृतवान् । किन्तु श्वेताश्वेन कृतं प्रथमं प्रहारम् एव सः सोढुं न शक्तवान् । महतीं वेदनाम् अनुभवन् सः प्रार्थितवान् – 'कृपया प्रहारं स्थगयतु' इति । तदा श्वेताश्वः हसन् अवदत् – ''मम सम्पत्तिः कदापि भवता प्राप्तुं न शक्या । भवतः अनुरागः यदि वास्तविकः स्यात् तर्हि भवान् रत्नप्रहारं सोढवान् स्यात् । भवतः अनुरागः न निष्कपटः । अतः भवान् सुप्रियां विस्मरति चेदेव वरम्'' इति ।

''भवता वञ्चना कृता । प्रेमपरीक्षणस्य अयं क्रमः सर्वथा अनुचितः । भवान् महाधूर्तः'' इति वेदनाम् अनुभवन् एव अवदत् भाग्यनाथः ।

तदा नितरां क्रुद्धः श्वेताश्वः – ''स्वयम् अपराधं कृत्वा मां वञ्चकं धूर्तं च वदति खलु भवान् ? धिक् भवन्तम् । रत्नैः पूर्णा पेटिका इष्टा खलु भवता ? तादृशीम् एव पेटिकां दास्यामि भवते । यावत् भवान् ततः विमुक्तिं न प्राप्स्यति तावत् एतस्मिन् लोके भवतः वासाय नास्ति अवसरः'' इति ।

श्वेताश्वस्य शापं श्रुत्वा नितरां भीतः भाग्यनाथः तस्य पादौ गृहीत्वा प्रार्थितवान् दैन्येन – ''मम अपराधः क्षन्तव्यः । कृपया एतस्मात् शापतः मम मुक्तिः करणीया'' इति ।

तदा उपशान्तकोपः श्वेताश्वः अवदत् – ''भूलोकः प्रेममयः अस्ति । तत्र गतं चेत् उच्चकोटिकप्रेमवन्तः भवता प्राप्यन्ते । ते एव भवन्तं शापात् मोचयिष्यन्ति'' इति ।

अनन्यगतिकः भाग्यनाथः तया पेटिकया सह भूलोकं गतवान् । विरागिणः वेषं धृत्वा उच्चकोटिकप्रेमवतः अन्वेषणम् आरब्धवान्

च । तेन बहुत्र अटनं कृतम् । एवम् अटनसमये तेन ज्ञातं यत् जनकपुरे चन्दनः नाम कश्चन उच्चकोटिकप्रेमवान् अस्ति इति ।

चन्दनः कृषिकस्य रामनाथस्य अन्तिमः पुत्रः । रामनाथः आदिनं कृषिक्षेत्रे परिश्रमं करोति । तस्य पत्नी मातापितरौ च गृहस्य सर्वाणि कार्याणि निर्वहन्ति । रामस्य ज्येष्ठः पुत्रः वीरः ग्रामे दैनन्दिनोपयोगिनां वस्तूनाम् आपणं चालयति । परन्तु चन्दनः तु विशिष्टं दायित्वं किमपि अवहन् सुखेन जीवति । ज्येष्ठैः बोधितेनापि तेन स्वव्यवहारः न परिष्कृतः ।

नगरे निवसन् विशालः नाम कश्चन धनिकः स्वपुत्रीं मल्लिकां रामस्य पुत्राय वीराय दातुम् ऐच्छत् । तस्य निमन्त्रणस्य अनुगुणं रामः नगरं प्रति सकुटुम्बं गतवान् । मल्लिकायाः परिणयः वीरेण अङ्गीकृतः । अतः वीर-मल्लिकयोः विवाहः योग्ये मुहूर्ते सम्पन्नः ।

एतदवसरे एव चन्दनः मल्लिकायाः भगिनीं मनोहरीम् अपश्यत् । सा तु अग्रजातः अपि अधिकसुन्दरी । अतः चन्दनः तां परिणेतुम् ऐच्छत् । एषा वार्ता मनोहर्या ज्ञाता । मनोहरी जानाति स्म यत् चन्दनः कार्यहीनः सन् अटति इति । अतः सा तं कटाक्षेण अपि न अपश्यत् ।

कदाचित् चन्दनः एकान्ते मनोहरीं दृष्ट्वा अवदत् – ''अहं भवतीं परिणेतुम् इच्छामि । अहं भवत्याम् अनुरागवान् अस्मि'' इति ।

तदा मनोहरी अवदत् – ''यदि भवान् मह्यं नूतनं गृहं क्रीत्वा दद्यात् तर्हि एव अहं भवतः परिणयम् अङ्गीकुर्याम्'' इति ।

''भवतु । नूतनं गृहं क्रीत्वा दास्यामि । तावत् भवत्या अन्यस्य परिणयः न अङ्गी-




करणीयः'' इति अवदत् चन्दनः ।

''नूतनस्य गृहस्य क्रयणाय कियान् कालः अपेक्ष्यते ?'' इति अपृच्छत् मनोहरी ।

चन्दनः क्षणकालं विचिन्त्य – ''भवती तिष्ठतु । अहं मम पितरं पृष्ट्वा आगत्य उत्तरं वदिष्यामि'' इति अवदत् ।

''मम निमित्तं गृहस्य क्रयणाय भवता पिता किमर्थं प्रष्टव्यः ?'' इति अपृच्छत् मनोहरी ।

''गृहस्य क्रयणाय धनम् आवश्यकं खलु ? तदर्थं मया पिता प्रष्टव्यः एव भवति'' इति अवदत् चन्दनः ।

''एतत् न युक्तम् । यत् गृहं भवान् मह्यं क्रेतुम् इच्छति तत् अन्यधनेन न, अपि तु स्वधनेन एव क्रेतव्यम् । पितुः समीपे यत् धनं स्यात् तत् तस्य परिश्रमस्य फलम् । भवान् स्वस्य परिश्रमेण यत् सम्पादयेत् तदेव भवतः



धनं भवितुम् अर्हति'' इति अवदत् मनोहरी ।

चन्दनः अनन्यगतिकः जातः । सः स्वस्य दुःखं भ्रातृजायां मल्लिकां निवेदितवान् । मल्लिका जानाति स्म यत् परिणयेच्छया आगतान् त्रिचतुरान् धनिकयुवकान् मनोहरी निराकृतवती आसीत् इति । एतं विषयं चन्दनं निवेद्य सा अवदत् - ''धनिकतरुणानां निराकरणं तया कृतम् इत्यतः स्पष्टं यत् सा धनमोहवती न इति । सा भवन्तं मनसा इच्छति । किन्तु भवान् परिश्रमं कुर्यात् इत्यपि इच्छति सा । अतः भवान् ताम् एव यदि परिणेतुम् इच्छति तर्हि परिश्रमेण धनं सम्पादयेत् । एतदर्थम् अन्यः कोऽपि मार्गः नास्ति'' इति ।

एतत् श्रुत्वा चन्दनः सङ्कल्पम् अकरोत् यत् धनं सम्पाद्य नूतनं गृहं क्रीत्वा तां परिणेष्यामि एव इति । धनसम्पादनाय कः मार्गः इति चिन्तयन् आसीत् सः । तेषु एव दिनेषु विरागिवेषेण स्थितः गन्धर्वः भाग्यनाथः तत्समीपम् आगतवान् । तस्य गृहे भोजनं कृतं तेन । 'इष्टार्थसिद्धिरस्तु' इति आशीर्वादः तेन कृतः । तदा चन्दनः स्वसमस्यां तं निवेदितवान् ।

विरागी तं कुतूहलेन पश्यन् - ''दृढः अनुरागः भवतः । आगच्छतु मया सह । अहं त्रीणि कठिनानि कार्याणि वदामि । तानि करोतु भवान् । ततः दिनाभ्यन्तरे अहं भवन्तं कोट्यधीशं करिष्यामि'' इति अवदत् ।

चन्दनः विरागिणम् अनुसृतवान् । ग्रामात् बहिः स्थितां पर्वतगुहां प्रति गतवन्तौ तौ । गुहा अन्धकारमयी आसीत् । विरागी चन्दनम् अवदत् - ''अत्र पद्मासने उपविश्य हनूमतः जपः करणीयः । क्षणमात्रम् अपि निद्राम् अकृत्वा एकं दिनं यापनीयं भवता । एकस्य दिनस्य समाप्तेः अनन्तरम् अहम् आगत्य भवन्तम् आह्वयामि । तदा नेत्रे उद्घाटयितुम् अर्हति भवान् । अग्रे किं करणीयम् इति तदा अहं वदिष्यामि'' इति ।

चन्दनः एतत् अङ्गीकृत्य ध्यानम् आरब्धवान् । ध्यानसमये कश्चन घोरः अट्टहासः तेन श्रुतः । केनचित् क्रियमाणः प्रहारः अपि तेन अनुभूतः । तथापि पद्मासनस्थः सः विचलितः न जातः । अनन्तरदिने विरागी आगत्य यावत् आहूतवान् तावत् ध्यानमग्नः एव आसीत् सः । विरागिणः ध्वनिं श्रुत्वा नेत्रे उन्मीलिते तेन ।

यदा तेन नेत्रे उन्मीलिते तदा गुहा प्रकाशेन पूर्णा आसीत् । विरागी तं प्रशंसन् अवदत् - ''साधु, चन्दन साधु ! पुरतः भित्तौ एकं राक्षसचित्रम् अस्ति । तत् चित्रं यथा आदिशति

तथा करोतु'' इति ।

तत् राक्षसचित्रं घोराकारम् आसीत् । यदा चन्दनः चित्रस्य समीपम् अगच्छत् तदा चित्रस्थः राक्षसः अवदत् - ''भवान् स्वस्य वामहस्तं मम मुखे स्थापयतु'' इति ।



चन्दनः धैर्येण चित्रस्थस्य राक्षसस्य मुखे वामहस्तं स्थापितवान् । तत्समनन्तरम् एव राक्षसस्य मुखं पिहितं जातम् । चित्रस्थः राक्षसः दन्तैः तस्य हस्तस्य चर्वणम् अकरोत् । महती वेदना प्राप्ता चन्दनेन । तथापि सः क्रन्दनं तु न कृतवान् । किञ्चित्कालानन्तरं चित्रस्थः राक्षसः मुखम् उद्घाट्य अवदत् - ''मम उदरभागे एका कुञ्चिका अस्ति । तां मम नाभौ स्थापयतु'' इति ।

चन्दनः राक्षसस्य उदरभागतः कुञ्चिकां निष्कास्य नाभौ स्थापितवान् । तदनन्तरक्षणे एव गुहायाः द्वारं सशब्दम् उद्घाटितं जातम् । विरागी चन्दनः च गुहायाम् अग्रे गतवन्तौ । तत्र एका लोहमयी पेटिका प्राप्ता । तां दर्शयन् विरागी चन्दनम् अवदत् - ''एतस्याः अन्तः कोट्यधिकरूप्यकमूल्यकानि वज्ररत्नादीनि सन्ति । यस्यां भवान् अनुरक्तः अस्ति तस्याः नाम्ना प्रतिज्ञां कृत्वा मुष्ट्या बलात् प्रताड्य पेटिकायाः आवरणं भञ्जनीयं भवता । एतदवसरे भवतः अङ्गुलयः भग्नाः भवेयुः । रक्तधारा प्रवहेत् अपि । तथापि प्रयत्नात् विरतिः न भवेत्'' इति ।

चन्दनः मनोहर्याः नाम्ना प्रतिज्ञां कृत्वा पेटिकायाः आवरणं बलात् मुष्ट्या प्रहृतवान् । लोहमयम् आवरणं सुदृढम् आसीत् । अतः चन्दनः पुनः पुनः मुष्ट्या प्रहृतवान् । तस्मात् तदीयः हस्तः व्रणितः जातः । रक्तधारा निर्गता । सः तत्रैव मूर्च्छां गतः । तत्समनन्तरम् एव पेटिका उद्घाटिता जाता । विरागी च भाग्यनाथरूपं प्राप्तवान् । तस्य स्पर्शात् चन्दनः सचेतनः जातः ।

ततः भाग्यनाथः चन्दनं प्रेम्णा पश्यन् - ''वत्स ! भवत्कारणतः मम शापविमोचनं जातम् । एतस्य प्रतिफलरूपेण पेटिकायां स्थितां समग्रां सम्पदम् अहं भवते ददामि'' इति उक्त्वा स्वस्य कथां श्रावितवान् ।

भाग्यनाथस्य कथां श्रुत्वा आश्चर्यम् अनुभवन् चन्दनः पेटिकायां दृष्टिम् पातितवान् । तत्र तेन फूत्कुर्वन्तः सर्पाः दृष्टाः । एतम् अंशं सः भाग्यनाथम् अवदत् । तदा भाग्यनाथः अवदत् - ''पेटिकायाः उद्घाटने भवता शक्तम् इत्यतः स्पष्टं यत् भवतः अनुरागः

उच्चकोटिकः एव इति । भवतः उपरि कोऽपि ऋणभारः अस्ति इति भासते । अतः एव भवता पेटिकायां सर्पाः दृष्टाः । भवान् इतः गत्वा अविलम्बेन स्वगृहसदस्यान् अत्र आनयतु'' इति ।

चन्दनः ततः निर्गतः । अचिरात् एव तद्-गृहसदस्याः सर्वे तत्र उपस्थिताः । चन्दनस्य उपरि कस्य ऋणस्य भारः अस्ति इति वक्तुं तेषु केनापि न शक्तम् । तदा भाग्यनाथः अवदत् - ''भवत्सु एकैकः अपि पेटिकायाः अन्तः दृष्टिं प्रसारयतु । यस्य प्रीतिः चन्दनस्य प्रीतितः अपि श्रेष्ठा सः पेटिकायां सम्पदं द्रष्टुम् अर्हति'' इति ।

ततः ते एकैकशः पेटिकायाः अन्तः दृष्टिं प्रसारितवन्तः । सर्वैः अपि सर्पाः एव दृष्टाः तत्र । अन्ते वीरः स्वदृष्टिं तत्र प्रासारयत् । तेन वज्ररत्नमुक्तादयः दृष्टाः । भाग्यनाथः तस्य प्रशंसां कृत्वा - ''भवन्तः सर्वे ऐकमत्येन जीवन्ति । अतः एषा सम्पत् भवताम् एव'' इति सर्वान् उद्दिश्य उक्त्वा अदृश्यतां गतः ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! चन्दनस्य अनुरागस्य उच्चकोटितां बहुधा परीक्षितवान् भाग्यनाथः । सर्वासु अपि परीक्षासु चन्दनः उत्तीर्णः अपि । तथापि पेटिकायां किमर्थं सर्पाः दृष्टिगोचराः जाताः ? वीरेण तत्र रत्नवज्रमुक्तादयः यत् दृष्टाः तस्य किं वा कारणम् ? तस्य तु पत्न्यां सामान्यः अनुरागः । तथापि तेन रत्नवज्रमुक्तादयः कथं दृष्टाः ? किम् एतत् असङ्गतं न ? किं गन्धर्वेण भाग्यनाथेन मायाजालं किमपि प्रसारितम् आसीत् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''यत् प्रवृत्तं तत्र न कापि असङ्गतिः । प्रियायाः निमित्तं प्राणान् अपि अर्पयितुं सिद्धात् अपि जनात् कौटुम्बिकदायित्वानि यथायोग्यं निर्वहन् जनः एव श्रेष्ठः । तादृशस्य सामान्यस्य प्रेम एव उच्चकोटिकम् । अतः एव वीरेण एकेन एव पेटिकायां सम्पत् दृष्टा'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



*अन्यदेशीयकथावली (इराकदेशीया कथा)*

# कपिरूपी राजकुमारः स्फुरद्रूपी जातः !

सहस्राधिकवर्षेभ्यः पूर्वम् इराकदेशस्य घनराण्ये अपूर्व सङ्गीतं श्रुतिपथम् आगच्छति स्म । तद्देशीयः राजा तत्परिवार-जनाः च उषसि एव नद्याः तीरे शान्ततया तिष्ठन्तः तत् सङ्गीतं शृण्वन्ति स्म । ते तां नदीं कदापि अतिक्रामन्ति स्म । यतः गीतगायकः उड्डीय गच्छेत् इति आतङ्कः आसीत् तेषाम् ।

गायकस्य 'उड्डयनम्' आश्चर्याय भवेत् खलु ? वस्तुतः गायकः आसीत् कश्चन सुवर्ण-पक्षी । सः वसति स्म सुवर्णवृक्षे । सः वृक्षः पक्षी च कथं तत् अरण्यं प्रति आगतौ इत्येतत् निरूपयति अधस्तनी कथा ।



पूर्वं कश्चन राजा आसीत् । तस्य षट् पत्न्यः । एकैकस्याः अपि राज्ञ्याः एकैकः पुत्रः । राज्ञः सप्तमः पुत्रः अपि आसीत् । ते षट् राजकुमाराः प्रासादे जाताः, प्रासादे एव प्रवृद्धाः च । किन्तु सप्तमः राजकुमारः अरण्ये जातः, अरण्ये एव प्रवृद्धः च ।

राजा उत्तमः मृगयापटुः । हरिणमांसं तस्य विशेषतः प्रियम् । आत्मना मारितस्य हरिणस्य मांसस्य पाकम् एव इच्छति स्म सः । प्रासादस्य पाचकः हरिणमांसस्य पाके अपटुः । अतः राज्ञीभिः एव राज्ञः निमित्तं पाकः करणीयः भवति स्म । राज्ञ्यः पर्यायेण पाकं कुर्वन्ति स्म । कस्याः पाकः रुचिपूर्णः इति ज्ञातुं न शक्नोति स्म राजा ।

''अहम् एकं हरिणं मारयित्वा आनेष्यामि । भवत्यः तस्य मांसं विभज्य पाकं कुर्वन्तु पार्थक्येन । तदा मया ज्ञायते - कस्याः पाकः रुचिपूर्णः इति'' इति उक्त्वा राजा कदाचित् मृगयार्थम् अरण्यं प्रति प्रस्थितवान् । किन्तु दौर्भाग्यवशात् तेन एकः अपि हरिणः न दृष्टः । हरिणं विना प्रतिगन्तुम् अनिच्छन् सः अङ्गरक्षकान् अवदत् - ''भवन्तः प्रतिगत्य राज्ञीः वदन्तु यत् हरिणः यदा प्राप्स्यते तदा एव मया प्रत्यागम्यते इति । आवश्यकतायां सत्यां अहम् अत्रैव रात्रिम्



यापयिष्यामि अपि'' इति ।

हरिणस्य अन्वेषणं कुर्वन् राजा अरण्ये सर्वत्र अटितवान् । सूर्यास्तकालः आसन्नः चेदपि तेन हरिणः तु कुत्रापि न प्राप्तः । किन्तु एकः सुन्दरः प्रासादः तेन दृष्टः । सः तं प्रासादं प्राविशत् । तत्र एकाकितया उपविष्टा अपूर्व-सुन्दरी तरुणी काचित् तेन दृष्टा । तादृशीम् इतः पूर्वं कुत्रापि न दृष्टवान् आसीत् सः ।

राजकुमारी स्वस्य कथाम् अश्रावयत् - ''कश्चन राक्षसः मम मातापितरौ देशस्य सर्वान् जनान् च मारितवान् । सः मां परिणेतुम् ऐच्छत् । यावत् परिणीयमानायाः प्रथमा इच्छा न पूर्यते तावत् सः कामपि मानवतरुणीं परिणेतुं न अर्हति स्म । तथा कश्चन शापः आसीत् तस्य । मया श्रुतम् आसीत् यत् कस्मिंश्चित् द्वीपे सुवर्णवृक्षे कश्चन सुवर्णपक्षी निवसति इति । मया एतदपि श्रुतम् आसीत् यत् तस्य सुवर्णपक्षिणः गानं यः शृणोति सः क्रौर्यरहितः भवति इति । अतः मया उक्तं - 'तं सुवर्णपक्षिणं सुवर्णवृक्षं च आनीय ददातु' इति । 'सः वृक्षः कुत्र अस्ति इति अहं जानामि एव' इति सोत्साहम् अवदत् सः राक्षसः । किन्तु वस्तुतः तत् स्थलं प्रति गमनं नितरां कष्टकरम् आसीत् । 'वर्षाभ्यन्तरे सुवर्णपक्षी सुवर्णवृक्षः भवता न आनीतः चेत् अहम् अन्यं कमपि परिणेतुम् अर्हामि' इति मया उक्तम् । तदा राक्षसेन उक्तम् - 'अन्यं भवती कामं परिणयतु नाम । किन्तु भवत्या तादृशात् परिणयात् प्राप्तः पुत्रः कपिरूपी भविष्यति' इति ।''

राजकुमार्या उक्तं सर्वं श्रुत्वा अपि राजा तस्याः परिणयेच्छां मनस्तः अपनेतुं न शक्त-वान् । सः तया सह स्वप्रासादम् अगच्छत् । हरिणानयनं परित्यज्य हरिणनयनाम् तरुणीम् आनीतवतः राज्ञः व्यवहारस्य विषये राज्ञ्यः सर्वाः असन्तुष्टाः । राजा नूतनायां पत्न्यां नितराम् अनुरक्तः आसीत् । अतः अन्याः राज्ञ्यः तावता एव प्रमाणेन असूयाग्रस्ताः जाताः । गच्छता कालेन नूतना राज्ञी यदा कपिरूपिणं पुत्रं प्रसूतवती तदा तासां सन्तोषः जातः । एतया घटनया नितरां खिन्नः राजा तां राज्ञीम् अरण्यं नीत्वा तस्याः प्रासादं प्रापितवान् । तस्याः रक्षणाय सुखजीवनाय च योग्यां व्यवस्थाम् उपकल्पितवान् च ।

अरण्यसमीपे किञ्चन गुरुकुलम् आसीत् । षण्णाम् अपि राज्ञीनां पुत्राः तत्र विद्याभ्यासाय गतवन्तः । कपिरूपी राजकुमारः अपि विद्याभ्यासाय तत्रैव अगच्छत् । सोऽपि राजकुमारः एव आसीत् इत्यतः गुरुः तस्य

प्रवेशं निराकर्तुं न शक्तवान् । कपिरूपी राजकुमारः अध्ययनेन सर्वान् अपि अतिशेते स्म । अन्ये राजकुमाराः वर्षाभ्यन्तरे यावत् अधीतवन्तः ततोऽपि दशगुणिताधिकम् अध्ययनं कृतवान् कपिरूपी राजकुमारः ।

एतस्मात् अन्ये राजकुमाराः असुयावन्तः जाताः । कदाचित् ते गुरुकुलम् अग्निना दग्ध्वा राजानम् उक्तवन्तः - 'कपिरूपी राजकुमारः एव एतत् दुष्कृत्यं कृतवान्' इति । राजा तस्य राजकुमारस्य बन्धनं कारयित्वा भटान् आज्ञापितवान् यत् उपयोगानर्हायां प्राचीनायां नौकायाम् एतम् उपवेश्य समुद्रे सुदूरे परित्यज्य आगच्छन्तु इति ।

भटैः राज्ञः आज्ञा पालिता । तावता गुरुकुलस्य आचार्यः तत्र उपस्थाय अवदत् यत् एतत् दुष्कृत्यं न कपिरूपिणा राजकुमारेण कृतं, प्रत्युत असूयाग्रस्तैः अन्यैः राजकुमारैः एव कृतम् इति ।

''प्रत्यानीयतां सः कपिरूपी राजकुमारः । तद्विषये महत् अन्याय्यम् अनुष्ठितम् अस्ति'' इति उक्तवन्तः सर्वे अस्थानिकाः । किन्तु तावता विलम्बः जातः आसीत् । भटैः समुद्रे परित्यक्ता सा प्राचीना नौका वायुना सुदूरं नीता आसीत् । आस्थानिकाः दुष्टानां राजकुमाराणां विषये नितरां क्रुद्धाः आसन् । अतः राजा तान् एकस्यां नौकायाम् उपवेश्य ततः प्रेषितवान् । तस्य चिन्तनम् आसीत् यत् आस्थानिकानां कोपः यदा उपशान्तः भविष्यति तदा ते प्रत्यानेतव्याः इति ।

राजकुमाराणां नौका कञ्चित् द्वीपं प्राप्नोत् । तावता वायुना आनीता कपिराजकुमारस्य प्राचीना नौका अपि तमेव द्वीपं प्राप्नोत् । तस्मिन् द्वीपे नदीद्वयं प्रवहति स्म । एका क्षीरमिव श्वेता । अपरा रक्तमिव रक्ता च । यदा राजकुमाराः द्वीपं प्राप्तवन्तः तदा तन्निवासिनः तान् स्मारितवन्तः यत् यः रक्तनद्यां प्रयाणं करोति तस्य आयुः समाप्तम् इव, यतः तस्याः तीरे कश्चन घोरः राक्षसः वसति, अतः तत्र प्रयाणं न करणीयम् इति ।

यदा कपिरूपी राजकुमारः दृष्टः तदा अन्ये राजकुमाराः उक्तवन्तः यत् वयं भवतः अन्वेषणाय एव अत्र आगताः इति । ते तम् एतदपि उक्तवन्तः - ''अस्माभिः श्वेतनद्यां प्रयाणं कृतम् । किन्तु तत्र कोऽपि विशेषः न लक्षितः । भवान् रक्तनद्यां प्रयाणं कुर्वन् स्वभाग्यपरीक्षणं करोतु । भवतः प्रत्यागमनपर्यन्तं वयम् अत्रैव स्थास्यामः'' इति ।

कपिरूपी राजकुमारः रक्तनद्यां प्रयाणम् आरब्धवान् । तत्समनन्तरम् एव ते दुष्टाः राजकुमाराः तं द्वीपं परित्यज्य राजधानीं प्रति प्रयाणम् आरब्धवन्तः ।

कपिरूपी राजकुमारः रक्तनद्याः प्रवाहम् अनुसरन् अग्रे गतवान् । अचिरात् एव तेन



कश्चन हिस्कारः श्रुतः । कश्चन घोरः सर्पः अपि दृष्टः तेन । कश्चित् सुवर्णवृक्षं परितः निरन्तरं परिभ्रमन् आसीत् सः सर्पः । पञ्च फणाः आसन् तस्य । तस्य सुवर्णवृक्षस्य ऊर्ध्वभागे कश्चन सुवर्णपक्षी निवसति स्म । कपिरूपी राजकुमारः मातुः मुखात् सुवर्णपक्षिणः, सुवर्णवृक्षस्य च विषये श्रुतवान् आसीत् । सः स्वस्य समग्रां शक्तिम् उपयुज्य सर्पस्य पृष्ठ-भागे स्थित्वा तस्य एकैकाम् अपि



फणां कर्तयितुम् उद्युक्तः जातः ।

सर्पस्य अन्तिमा फणा अपि यदा भूमौ पतिता तदा सुवर्णपक्षी गानम् आरब्धवान् । सुमधुरं सङ्गीतम् आसीत् तत् । तस्य सङ्गीतस्य श्रवणस्य समनन्तरम् एव कपिरूपी राजकुमारः स्फुरद्रूपी जातः ।

सुवर्णपक्षिणः गानं श्रुत्वा द्वीपवासिनः सर्वे तत्र सम्मिलिताः । एषा अपूर्वा घटना कथं प्रवृत्ता इति ते ज्ञातवन्तः । तस्य द्वीपस्य राजा, राज्ञी, सुन्दरी राजकुमारी चापि अचिरात् एव तत्र उपस्थिताः । यः तं घोरं सर्पं मारयति तस्मै मया पुत्री दास्यते इति घोषितवान् आसीत् राजा । तदनुगुणं सः पुत्रीं तस्मै राजकुमाराय दत्त्वा विवाहं सवैभवं निर्वर्तितवान् । ततः सः अलङ्कृतायां नौकायाम् उपवेश्य जामातरं पुत्रीं च प्रेषितवान् । वरदक्षिणरूपेण राजकुमारः सुवर्णवृक्षं सुवर्णपक्षिणं च प्राप्तवान् । तदुभयं, प्राचीनां नौकां च स्वीकृत्य ततः प्रस्थितवान् सः ।

स्वस्य सप्तमं पुत्रं स्फुरद्रूपिणं दृष्ट्वा राजा नितराम् आश्चर्यचकितः । राजकुमारस्य स्वरः, तेन आनीता प्राचीना नौका, तेन सह आगतैः उक्तं द्वीपे प्रवृत्तस्य विवरणम् इत्यादीनां कारणतः सः अवगतवान् यत् एषः मम पुत्रः एव इति ।

ततः राजा अरण्यस्थां स्वस्य सप्तमीं पत्नीं निवेदितवान् यत् प्रासादं प्रति आगन्तव्यम् इति । किन्तु सा स्वस्य प्रासादस्य त्यागं निराकृतवती । अतः राजा तस्याः प्रासादस्य पुरतः एव तं सुवर्णवृक्षम् आरोपितवान् । तया सह तत्रैव वासम् आरब्धवान् अपि ।

दीर्घः कालः अतीतः चेदपि ते षट् राजकुमाराः न प्रत्यागताः । अतः जनैः अवगतं यत् ते प्रयाणावसरे एव मरणं प्राप्तवन्तः इति । केषाञ्चित् वर्षाणाम् अनन्तरं राजा दिवं गतः । सप्तमः राजकुमारः मात्रा पत्न्या च सह राजधानीं प्रत्यागत्य सिंहासनम् अलङ्कृतवान् । प्रतिसप्ताहं सः पत्न्या सह अरण्यं गत्वा सुवर्णपक्षिणः सङ्गीतस्य श्रवणेन किञ्चित्कालं यापयति स्म ।

## उत्तराञ्चलीया जानपदकथा

# तरुण्या चितः आत्माभिलाषानुगुणः वरः



रामस्वरूपठाकुरः कश्चन महाधनिकः । यदा तदीया पत्नी पुत्रीं प्रसूय परलोकं श्रितवती तदा रामस्वरूपः महति शोकसागरे निमग्नः । एतस्मात् दुःखातिरेकात् बहिः आगन्तुं सः पुत्र्याम् अधिकां प्रीतिं दर्शितवान् । जन्मना एव सा अतिसुन्दरी आसीत् ।

दिनानि गतानि । संवत्सराः अतीताः । रामस्वरूपः तस्याः नाम कृतवान् चमेली इति । चमेली प्राप्तवयस्का जाता । सा तादृशी सुन्दरी तरुणी जाता यत् सकृत् तां दृष्टवान् कश्चित् पुनः पुनः तस्यां स्वदृष्टिं निक्षिपति स्म एव । ग्रामे तस्याः सौन्दर्यस्य विशेषख्यातिः आसीत् । तस्याः सख्यः तां वदन्ति स्म – 'यः भवत्यै रोचते तमेव वरीतुं समर्था भवती' इति । स्वस्य सौन्दर्यस्य विषये विशेषाभिमानः आसीत् तस्याः ।

तेषु दिनेषु क्षौरिकाः परिसरे स्थितानां सर्वेषां तरुणानां विषये समग्रं विवरणं जानन्ति स्म । अतः रामस्वरूपः स्वस्य ग्रामस्य क्षौरिकं स्वगृहम् आनाय्य – 'चमेल्याः कृते योग्यः वरः किं कोऽपि अस्ति ?' इति अपृच्छत् । तदा क्षौरिकः आत्मना ज्ञातानां तरुणानां गुणावगुणान् एकैकशः वर्णितवान् । रामस्वरूपः अवदत् – ''वरः मध्यमस्तरीये कुले जातः स्यात्, किन्तु उत्तमैः गुणैः युक्तः भवेत्'' इति ।

चमेली पाकशालायां स्थित्वा रोटिकाः निर्मान्ती तयोः सम्भाषणम् आद्यन्तं श्रुतवती । सर्वस्य श्रवणस्य अनन्तरं सा पाकशालातः बहिः आगत्य पितरम् अवदत् – ''तात ! मया विशेषशक्तिमान् जनः एव परिणेष्यते, न तु सामान्यः कोऽपि'' इति ।

एतत् श्रुत्वा रामस्वरूपः क्षौरिकः च आश्चर्येण स्तब्धौ । चमेली विवाहविषये स्वस्य अभिप्रायम् एवं निस्सङ्कोचं वदेत् इति ताभ्यां न चिन्तितम् आसीत् । अतः रामस्वरूपः

पुत्रीम् अवदत् - "वत्से ! तरुण्यः स्वस्य विवाहस्य विषये एवं कदापि न वदेयुः । विवाहनिश्चयः ज्येष्ठैः करणीयः । तत्र तरुणीनां प्रवेशस्य न अवकाशः । अस्मत्कुलयोग्यः तरुणः अन्विष्यमाणः अस्ति मया" इति ।

तदा चमेली - "तात ! भवान् यङ्कमपि चिनुयात् । तस्य परिणयम् अहं सर्वथा न अङ्गीकरिष्यामि । मम पतिम् अहमेव प्रयत्नेन अन्विष्यामि । मम इच्छानिच्छादिकं कश्चन क्षौरिकः कथं वा जानीयात् ? तत् अज्ञात्वा योग्यस्य वरस्य अन्वेषणं सः कथं वा कुर्यात् ?" इति उक्त्वा ततः पाकशालां प्रति अगच्छत् ।

एतस्मात् अपमाननं प्राप्य खेदेन ततः निर्गतवान् क्षौरिकः । स्वस्य प्रयत्ने विघ्नः उत्पन्नः इत्यतः रामस्वरूपः अपि खिन्नः । किन्तु पुत्रीम् अधिकं किमपि वक्तुम् अनिच्छन् सः मौनेन अतिष्ठत् ।

सायङ्कालपर्यन्तं चमेली मौनेन एव आसीत् । रात्रौ पाककार्यादिकं समाप्य शयाना सा समग्रां रात्रिं यावत् अग्रिमकार्ययोजनां चिन्तितवती । 'प्रातः पितुः उत्थानात् पूर्वम् एव मया गृहात् निर्गन्तव्यम् । विशेषसामर्थ्यवन्तम् अन्विष्य तं परिणीय एव मया गृहं प्रत्यागन्तव्यम्' इति आलोचितवती सा ।

प्रातः सा जलस्य आनयनाय निर्गच्छन्ती इव अभिनयन्ती घटं स्वीकृत्य गृहात् प्रस्थितवती । कूपस्य पार्श्वे घटं स्थापयित्वा मुख्यमार्गेण प्रयाणम् अनुवर्तितं तया ।

किञ्चिद्दूरं गमनानन्तरं तया दूरात् केचन



दृष्टाः । तेषां पुरोभागे उत्तमानि वेषभूषणानि धृतवान् युवा अश्वस्य उपरि उपविश्य गच्छन् आसीत् । केचन तस्य उभयोः पार्श्वयोः पृष्ठतः च दृश्यन्ते स्म । मार्गम् उभयतः स्थिताः जनाः विनयेन तं नमस्कुर्वन्ति स्म ।

'एषः किम् एतस्य देशस्य राजा स्यात् ?' इति अचिन्तयत् चमेली । तया इतः पूर्वं राजा न दृष्टः आसीत् । सः अश्वारोही सुन्दरः दृढकायः च दृश्यते स्म । 'एषः यदि राजा एव स्यात् तर्हि निश्चयेन महासामर्थ्यवान् स्यादेव । किन्तु एषः किं मम परिणयम् अङ्गीकुर्यात् ?' इति चिन्तयन्ती सा तं गणम् अनुसृतवती ।

किञ्चिद्दूरं गमनस्य अनन्तरं कश्चन सरोवरः दृष्टः । सरोवरतीरे कस्यचित् वृक्षस्य अधः कश्चन तपस्वी उपविष्टः आसीत् । तं परितः केचन भक्ताः उपविष्टाः आसन् । ते तस्मात् तपस्वितः आशीर्वादं प्राप्नुवन्तः आसन् ।

सः अश्वारोही अश्वात् अवतीर्य तस्य तपस्विनः समीपम् अगच्छत् । तेन सह आगताः फलानि पुष्पाणि च आनीय दत्त-

# THE ADVENTURES OF G-man

THE DAILY

THE BIG THIRST

## एक बड़ी प्यास
भाग 1


मेजर सूर्यराज को ऑर्ब हालात से परिचित करवाता है।
लगता है दुनियाभर का पानी किसी अंजानी चीज़ से दूषित हो गया है।
क्या वो बैक्टीरिया है, परजीवी है, या कोई केमिकल या फिर न्यूक्लियर अवशेष ?


सही-सही तो कुछ नहीं कह सकता... दुनियाभर से आए नमूनों की मैं अभी जांच कर रहा हूं।


संक्रमण की सबसे क़रीबी जगह यहां की पानी की टंकी है।
तो अपनी जांच-पड़ताल में यहीं से शुरू करता हूं।


Parle-G
अपनी जांच के बारे में मुझे बताते रहना।
क्या जी-मैन दुनिया को इस तबाही से बचा पाएगा? जानने के लिए अगला अंक देखिए।

वन्तः । सः अश्वारोही तानि तस्मै तपस्विने समर्प्य तपस्विनः आशीर्वादं प्राप्य ततः स्वस्य प्रयाणम् अनुवर्तितवान् ।

'यः महाशक्तिशाली इति मया चिन्तितम् आसीत् सः एतस्य तपस्विनः पुरतः शिरः अवनमय्य स्थितवान् । अतः एषः तपस्वी एव तस्मात् अश्वारोहितः अधिकशक्तिशाली । किन्तु एषः तपस्वी मम परिणयं न अङ्गी-कुर्यात् । तपस्विनः यादृशं सामर्थ्यं तादृशेन एव सामर्थ्येन युक्तः अन्यः कोऽपि मया अत्र दृश्येत' इति चिन्तयन्ती सा सरोवरतीरे एव किञ्चित्कालम् उपविष्टवती ।

किञ्चित्कालानन्तरं तपस्वी ततः उत्थाय फलानि पुष्पाणि च स्वीकृत्य समीपस्थं देवालयं प्रति प्रस्थितवान् । तत्र सः देवस्य पुरतः तानि फलपुष्पादीनि समर्प्य दीपं च प्रज्वाल्य प्रदक्षिणपुरस्सरं नमस्कृत्य ततः निर्गतवान् । तदा चमेली अचिन्तयत् - 'एतस्मात् अपि एषः देवः एव श्रेष्ठः' इति ।

'अहम् एतं देवम् एव पतित्वेन मत्वा अत्रैव सेवां कुर्वती वासं करिष्यामि' इति निश्चित्य सा देवस्य पुरतः उपाविशत् । नेत्रे निमीलित-वत्याः तस्याः नेत्रयोः पुरतः देवः पुरुषाकारं प्राप्य अतिष्ठत् । किञ्चित्कालानन्तरं यदा तया नेत्रे उन्मीलिते तदा कश्चन शुनकः गर्भगृहं प्रविश्य देवस्य पुरतः स्थापितम् आहारादिकं खादित्वा निर्गच्छन् दृष्टः । 'शुनकादपि स्वस्य आहारं रक्षितुम् असमर्थस्य एतस्य अहो, असामर्थ्यम्' इति अचिन्तयत् चमेली ।



मन्दिरात् निर्गच्छन्तं शुनकम् अन्वसरत् सा । सः शुनकः ततः निर्गत्य कस्यचित् कृषिकस्य गृहं प्राविशत् । कृषिकः प्रीत्या तम् अस्पृशत् । शुनकः पुच्छं चालयन् तस्य पादम् अलीढ । 'शुनकात् अपमाननं प्राप्तवतः देवात् एषः कृषिकः एव अधिकसामर्थ्य-शाली' इति अचिन्तयत् चमेली ।

'यः कठिनाम् अपि भूमिं लीलया खनति सः निश्चयेनास्ति महाशक्तिशाली' इति चमेली अवगतवती । अतः सा तस्य तरुणस्य कृषिकस्य समीपं गत्वा तस्य पादौ गृहीत्वा अवदत् - ''आर्य ! अस्माकं ग्रामे महाशक्ति-शाली भवान् एव । अतः मम निवेदनं यत् भवता अहं परिणेतव्या इति । विवाहस्य अनन्तरम् अहं भवतः, गृहस्य, भूमेः च निर्वहणदायित्वं यथायोग्यं निर्वक्ष्यामि'' इति ।

सः तरुणः कृषिकः तस्याः विषये पूर्णं विवरणम् आदौ श्रुतवान् । तस्याः सौन्दर्यं तस्य मनः आकर्षत् एव ।

सः अवदत् - ''चमेलि ! अहं भवतीं परिणेष्यामि'' इति ।

जन्मशताब्दाचरणम्

# लालबहादुरशास्त्रिणः

## बाल्यस्य विहङ्गावेक्षणम्

*लालबहादुरशास्त्री जवहारलालनेहरूवर्यस्य दिवङ्गतेः अनन्तरं देशस्य द्वितीयः प्रधानमन्त्री जातः १९६४ तमे वर्षे । इतः शतात् वर्षेभ्यः पूर्वं तस्य जन्म जातम् । एतस्मिन् वर्षे तदीयजन्मशताब्दाचरणम् अधिकृत्य विविधाः कार्यक्रमाः प्रचलिष्यन्ति ।*

उत्तरप्रदेशस्य एकं सामान्यं रेल्वे-स्थानक-नगरम् अस्ति मोगलसराय् । तस्मिन् एव नगरे १९०४ तमवर्षस्य अक्टोबर्मासस्य द्वितीये दिनाङ्के लालबहादुरशास्त्रिवर्यस्य जन्म जातम् । सः नेहरूमन्त्रिमण्डले रेल्वेसचिवः गृहसचिवः च आसीत् । निष्कपटता, साहसशीलता, शान्तचित्तता, आत्मनियन्त्रितता, दयापरता, स्वार्थरहितता इत्यादयः गुणाः आ बाल्यात् एव तस्मिन् आविर्भूताः आसन् ।

तस्य पिता कश्चन अध्यापकः । अष्टादशमासात्मके एव वयसि तेन पितृवियोगः प्राप्तः । अतः सः स्वस्य विद्याभ्यासाय काशीस्थं मातुलगृहं प्रति गतवान् । गृहे सर्वे तं निर्दिशन्ति स्म 'नन्हे' (लघुबाल !) इति । महति घोरातपे अपि तेन प्रतिदिनं सुदूरं विद्यालयं प्रति पादाभ्यां गन्तव्यं भवति स्म विद्याभ्यासाय ।

तस्य शैशवे काचित् विलक्षणा घटना घटिता । तस्य माता त्रिमासीयेन शिशुना सह तीर्थस्नानाय गङ्गानदीं प्रति गता । स्नानघट्टे महान् सम्मर्दः आसीत् । तदवसरे सः शिशुः मातुः हस्तात् च्युतः सन् कस्यचित् गोपालकस्य कण्डोले पतितः । सः गोपालकः निस्सन्तानः आसीत् । भगवता एव अयं शिशुः मह्यं दत्तः इति भावयन् सः गोपालकः तं शिशुं महता सन्तोषेण स्व्यकरोत् । आरक्षकाः नष्टं तं शिशुं गोपालकसमीपे दृष्टवन्तः । महता दुःखेन एव तेन गोपालकेन सः शिशुः जन्मदात्र्यै अर्पितः ।

धैर्यम् आत्माभिमानश्च अल्पे एव वयसि लालबहादुरे आस्ताम् । यदा सः बाल्ये काश्याम् अधीयानः आसीत् तदा गङ्गायाः अपरस्मिन् तीरे प्रचलन्तीं मेलां प्रति मित्रैः सह अगच्छत् । प्रत्यागमनाय तस्य कोषे धनं न आसीत् ।



अभिमानधनः सः तदर्थं मित्राणि धनं याचितुं न ऐच्छत् । अतः सः मित्रगणात् उपायेन दूरं गतवान् । मित्रैः तस्य अनुपस्थितिः न लक्षिता । ते नौकाम् आरूढवन्तः । यदा नौका ततः प्रस्थिता तदा लालबहादुरः नदीतरणम् आरब्धवान् । मित्रेषु पश्यत्सु एव सः नद्याः अपरं तीरं प्राप्तवान् ।



लालबहादुरः आकारेण वामनः, किन्तु मनसा नितरां समुन्नतः । तस्य नैतिकी शक्तिः अतिप्रबला आसीत् । षष्ठे वयसि जाता काचित् घटना तस्य मनसि महान्तं प्रभावम् अजनयत् ।

कदाचित् सः मित्रैः सह किञ्चन उद्यानम् अगच्छत् । तस्य मित्रैः वृक्षाः आरूढाः । एषः तु अधः एव आसीत् । तावता उद्यानपालकः आगतः । पुष्पम् अवचिन्वन्तम् एतम् अपश्यत् सः । आगच्छन्तम् उद्यानपालकं दृष्ट्वा अन्यैः सर्वैः मित्रैः पालयनं कृतम् । उद्यानपालकः लालबहादुरम् अगृह्णात्, बहुधा अताडयत् च । लालबहादुरः रोदनम् अकरोत् ।

तावता तम् अभिज्ञातवान् सः उद्यानपालकः खेदेन अवदत् - ''वत्स ! अनाथेन भवता उत्तमः व्यवहारः करणीयः'' इति । एतत् वचनं लालबहादुरस्य मनसि विलक्षणं परिणामम् अजनयत् ।

सः अचिन्तयत् - 'सत्यम्, अहम् अनाथः । मया भाविनि काले उत्तमः व्यवहारः करणीयः' इति ।

१९६६ तमे वर्षे जनवरीमासस्य दशमे दिनाङ्के ताष्केण्ट्नगरे भारतपाकिस्थानयोः सन्धिं हस्तक्षरैः प्रमाणीकृतवान् लालबहादुरवर्यः ततः द्वित्रघण्टाभ्यन्तरे एव तीव्रं हृदयाघातं प्राप्य प्राणैः वियुक्तः जातः । तस्य कलेवरं भारतं प्रति आनीतम् । तस्य संस्मरणाय 'विजयघट्ट'स्य निर्माणं कृतम् । तस्य स्मारके उत्कीर्णं दृश्यते - 'जय जवान्, जय किसान्' इति वाक्यम् । भारतपाकिस्थानयुद्धावसरे सैनिकानाम् उत्साहवर्धनाय, १९६५ तमे प्रवृत्तायाः प्रवाहपीडायाः काले कृषेः प्रोत्साहनाय च तच्च वाक्यं तेन पौनःपुन्येन उद्घोषितम् आसीत् ।



# पारस्परिकं वैरम्

प्राचीने काले ब्रह्मदत्तराजः काशीराज्यं परिपालयति स्म । तस्य शतं पुत्राः आसन् । कनिष्ठस्य पुत्रस्य नाम संवरः इति । राजा स्वस्य एकैकम् अपि पुत्रम् एकैकस्य गुरोः समीपं प्रेषितवान् । कनिष्ठः पुत्रः संवरः बोधिसत्त्वस्य गुरुकुलं प्रति प्रेषितः तेन ।

महाज्ञानिनः बोधिसत्त्वस्य सकाशात् अनेकानि वर्षाणि यावत् संवरः विद्यां गृहीतवान्, सर्वासु विद्यासु प्रवीणः जातः च । एतदभ्यन्तरे अन्येषां राजकुमाराणाम् अपि विद्याभ्यासः समाप्तः आसीत् । अतः तेषां गुरवः तान् महाराजसमीपं प्रेषयित्वा राजानम् अवदन् - ''महाराज ! भवतः पुत्राः सर्वासु विद्यासु पारङ्गताः सन्ति'' इति । एतेन प्रसन्नः राजा तान् सर्वान् यथोचितं सत्कृतवान् ।

एतदनन्तरं राजा राजकुमारान् विविधानां राज्यानां शासकान् कृतवान् । एतत् ज्ञातवान् संवरः गुरुं बोधिसत्त्वं कदाचित् अपृच्छत् - ''गुरुवर्य ! यदि मम पिता भ्रातॄन् इव माम् अपि कस्यचित् राज्यस्य शासकं कर्तुम् इच्छेत् तर्हि मया किं करणीयम् ?'' इति ।

तदा बोधिसत्त्वः अबोधयत् - ''यदि पिता भवन्तं कस्यचित् राज्यस्य शासकं कर्तुं, राजधानीतः बहिः प्रेषयितुं च इच्छेत् तर्हि भवान् तत् मा अङ्गीकरोतु । भवतः अग्रजाः पितरं परित्यज्य एकैकशः गताः । मातापित्रोः सेवा एव पुत्रस्य परमं कर्तव्यम् । तत् भवान् श्रद्धया करोतु । भक्त्या पितुः सेवां करोतु । एतत् भवतः आद्यं कर्तव्यम्'' इति ।

कदाचित् राजा ब्रह्मदत्तः पूर्वसूचनां विनैव बोधिसत्त्वस्य आश्रमं प्रति आगतवान् । संवरः पितरं विनयेन प्रणम्य गुरोः पार्श्वे अतिष्ठत् । राजा तम् अपृच्छत् - ''वत्स ! किं भवतः विद्याभ्यासः परिसमाप्तः ?'' इति ।

''गुरुदेवस्य कृपया मया सर्वाः विद्याः अधिगताः सन्ति'' इति उत्तरं दत्तवान् संवरः ।

''वत्स ! महतः सन्तोषस्य विषयः एषः । इतः परं भवता अपि कस्यचित् राज्यस्य

शासकेन भवितव्यम् । अतः भवान् राज्यस्य कमपि भागं चिनोतु'' इति अवदत् राजा ।

तदा संवरः अवदत् – ''अहं भवतः कनिष्ठपुत्रः अस्मि । यदि अग्रजाः इव अहम् अपि राजधानीं परित्यज्य गच्छेयं तर्हि भवतः योगक्षेमदायित्वं को वा निर्वहेत् ? अतः अहं राज्यं न इच्छामि । अत्र एव तिष्ठन् भवतः सेवया दिनानि यापयितुम् इच्छामि'' इति ।

एतत् श्रुत्वा राजा ब्रह्मदत्तः नितरां सन्तुष्टः । तस्मात् दिनात् संवरः पित्रा सह वासम् आरब्धवान् । काले काले बोधिसत्त्वस्य मार्गदर्शनं प्राप्नोति स्म सः ।

कदाचित् सः गुरोः बोधिसत्त्वस्य मार्गदर्शनस्य अनुगुणं काञ्चित् ऊषरभूमिं समतलां विधाय तत्र फलपुष्पादिसस्यानि आरोपितवान् । अल्पे एव काले तत्र एकं सुन्दरम् उद्यानं निर्मितं जातम् । एतत् जनानाम् आकर्षणकेन्द्रम् अपि जातम् । बहवः जनाः तस्य दर्शनार्थं विहाराय च तत्र आगच्छन्ति स्म । एतस्य उद्यानस्य कारणतः संवरस्य नाम ख्यातम् अभवत् ।

कदाचित् संवरः पितुः अनुज्ञां प्राप्य नगरस्य सर्ववर्णप्रमुखाणां कृते भोजोत्सवं व्यवस्थापितवान् । विदेशतः आगच्छतां राजदूतानां वणिजां चापि वासाय तेन सर्वव्यवस्थोपेतानि वासभवनानि निर्मितानि । एतेन तदीयं यशः देशे सर्वत्र प्रसृतम् ।

एवमेव बहूनि वर्षाणि अतीतानि । राजा वृद्धः जातः । राज्ञः अन्तिमदिनानि अपि सन्निहितानि । राजा मन्त्रिणः आहूय अवदत् – ''मम मरणस्य अनन्तरम् उत्तराधिकारी भवद्भिः एव चेतव्यः । मम शतं पुत्राः अपि




अत्र अधिकारिणः एव । अहं तु कमपि राजानं न करिष्यामि । भवन्तः एव विचिन्त्य योग्यं कञ्चित् मम उत्तराधिकारिणं कुर्वन्तु'' इति ।

राज्ञः मरणस्य अनन्तरं सर्वे मन्त्रिणः सम्भूय चर्चां कृत्वा निर्णीतवन्तः यत् संवरः एव उत्तमः राजकुमारः अस्ति इति । अतः तस्य पट्टाभिषेकं सवैभवं निर्वर्तितवन्तः ते ।

संवरस्य पट्टाभिषेकस्य कारणतः नवनवतिः राजकुमाराः नितरां क्रुद्धाः । ते सर्वे परस्परं समालोच्य दूतद्वारा संवराय वार्तां प्रेषितवन्तः यत् भवता सिंहासनं परित्यक्तव्यम् इति । ततः ते सर्वे ससैन्यम् आगत्य संवरस्य दुर्गम् आक्रान्तवन्तः अपि ।

संवरः प्रवृत्तं सर्वं गुरुं बोधिसत्त्वं निवेदितवान् । तदा बोधिसत्त्वः तम् अबोधयत् – ''अग्रजानां शत्रुतासम्पादनं पापाय एव । अतः भवान् पितुः राज्यं शतधा विभज्य समप्रमाणेन

सर्वेभ्यः अग्रजेभ्यः ददातु'' इति ।

संवरः तथैव अकरोत् । एतत् दृष्ट्वा ज्येष्ठः भ्राता उपासकनामकः अनुजान् अवदत् - ''संवरः सिंहासनम् आक्रम्य अस्मान् सर्वान् शत्रून् भावयन् अस्ति इति चिन्तयित्वा वयं ससैन्यम् अत्र आगताः । किन्तु सः न्यायपूर्वकं व्यवहारं कृत्वा सर्वेषां जनानां प्रशंसां प्राप्तवान् अस्ति । एतादृशस्य आक्रमणं वयं कथं कुर्याम ?'' इति ।

''एवं तर्हि इदानीम् अस्माकं कर्तव्यं किम् ?'' इति अपृच्छत् अपरः भ्राता ।

''अनुजस्य विषये सन्धिप्रस्तावपूर्णः एव व्यवहारः युक्तः इति भाति मम । पितुः सिंहासनस्य उत्तराधिकारिणः भवितुं वयं सर्वे अर्हाः इति तु सत्यम् एव । किन्तु सिंहासनस्य उत्तराधिकारी तु एकः एव भवितुम् अर्हति । अतः संवरस्य उत्तराधिकारिताम् अङ्गीकृत्य तेन ये भागाः दत्ताः तेषां प्रत्यर्पणम् एव वरम् इति भाति मम'' इति अवदत् ज्येष्ठः अग्रजः ।

एतं प्रस्तावम् अन्ये सर्वे अङ्गीकृतवन्तः । ततः ते संवरस्य जयम् उच्चारयन्तः सेना-सहिततया नगरं प्रविष्टवन्तः । सिंहासने उपविष्टः संवरः तान् सहार्दं स्वागतीकृतवान् यथोचितम् आसनं दत्त्वा सत्कृतवान् च ।

एतदनन्तरं ज्येष्ठः अग्रजः संवरम् अपृच्छत् - ''सहोदर ! भवतः धर्मगुणः प्रशंसनीयः एव अस्ति । सर्वेषां विषये यः एषः उत्तमः व्यवहारः क्रियते तस्य निमित्तं शक्तिः कुतः प्राप्यते भवता ?'' इति ।

''कस्यापि द्वेषम् अहं न करोमि । सर्वान् अपि कर्मचारिणः प्रीत्या पश्यामि । काले काले तेभ्यः यथोचितं वेतनं ददामि । अन्य-राज्यतः आगन्तॄन् वणिग्-राजदूतादीन् आदरेण सत्करोमि । जनानां हितम् एव स्वहितं भावयामि'' इति अवदत् संवरः ।

सर्वेषां सहोदराणां प्रतिनिधित्वेन संवरम् आशीर्वादेन अनुगृह्य ज्येष्ठभ्राता अवदत् - ''एवमेव धर्ममार्गेण राज्यं परिपालयन् भवान् कीर्तिमान् भवतु । वयं भवतः साहाय्यं कुर्वन्तः देशं शत्रुभयरहितं करिष्यामः । भवान् एतस्मिन् एव लोके इन्द्रपदवीं प्राप्नोतु'' इति ।

बोधिसत्त्वस्य शिष्यः संवरः एवम् अग्रजानां प्रीत्यादरादिकं प्राप्य अनेकानि वर्षाणि देशं पालितवान् । श्रेष्ठराजत्वेन तेन कीर्तिः प्राप्ता ।





# विष्णुपुराणम्

श्रीरामः लीलया धनुषि ज्यां बद्धवान् । तदा परशुरामः - "हे रघुराम ! इतः परम् अहं क्षत्रियेषु स्थितां द्वेषभावनां परित्यज्य शान्तिपूर्वकं तपस्यां करिष्यामि । मया दत्तं कोदण्डं भवदीयम् एव । भवान् कोदण्ड-रामः अपि" इति उक्त्वा ततः निर्गतवान् ।

अयोध्यानगरी नवदम्पत्योः आगमनेन विशेषतः शोभमाना जाता । सीता रामः च परस्परानुरागेण जीवनं यापयतः स्म ।

अथ कदाचित् रामः सीताम् उक्तवान् - "जानकि ! राजभवने वासात् अपि वने विहारः अत्यानन्दकरः । वने भवती वन-लक्ष्मीः इव विराजेत" इति । एतत् श्रुतवत्याः सीतायाः कपोले आरक्ते जाते ।

कानिचन दिनानि सुखेन गतानि । ततः दशरथेन दुश्शकुनानि दृष्टानि । उल्कापाताः अपि तेन दृष्टाः । वृद्धदम्पत्योः वचनानि तेन स्मृतानि । प्राणापायभीतिः तम् अबाधत ।

'रामचन्द्रस्य राज्याभिषेकः अचिरात् एव निर्वर्तनीयः' इति सः सङ्कल्पितवान् । वसिष्ठ-द्वारा मुहूर्तमपि निश्चितवान् सः ।

सत्यलोके ब्रह्मा पद्मासनस्थः सच्चिदानन्दे लीनः आसीत् । सरस्वती वीणया रागमालाम् आलपन्ती आसीत् ।

नारदः अन्ये देवाः च चिन्ताग्रस्ततया ब्रह्मणः समीपं गत्वा उक्तवन्तः - "भगवन् ! रामचन्द्रः सिंहासने उपविशति चेत् राक्षस-संहारः कथं प्रवर्तेत ? एतम् अंशं चिन्तयन्तः सर्वे देवाः चिन्ताक्रान्ताः सन्ति" इति ।

ब्रह्मा सरस्वतीम् अभिप्रायगर्भेण दृष्टि-क्षेपेण अपश्यत् । तदा सरस्वती अवदत् - "यत् भवेत् तत् भविष्यति एव । नारदवर्य !




कलहप्रियः भवान् त्रिकालज्ञानी अपि । तत्र पश्यतु, कलहशीलतया भवतः भगिनी इव स्थिता मन्थरा कैकेय्याः भवनं प्रविशन्ती अस्ति'' इति ।

एतत् श्रुत्वा देवाः नारदः च भूलोकस्य दिशि दृष्टिं प्रसारितवन्तः । मन्थरा स्वगतम् इव किमपि वदन्ती गच्छन्ती आसीत् ।

नारदः सरस्वतीम् उद्दिश्य - ''वाग्देवि ! जगतः कल्याणाय भवती मन्थरायाः मुखतः किं वाचयिष्यति इति न ज्ञायते ! सर्वं भवत्याः कृपाम् एव अवलम्बते'' इति उक्त्वा ब्रह्माणं नमस्कृत्य ततः निर्गतवान् । देवाः अपि तम् अनुसृतवन्तः ।

कुब्जा मन्थरा कैकेय्याः मातृगृहात् आगता वृद्धा दासी । सा कैकेयीं सहानुभूतिपूर्णया दृष्ट्या पश्यन्ती स्थिता आसीत् ।

कैकेयी मन्थराम् अपृच्छत् - ''मन्थरे ! का वार्ता ? किमर्थं भवती खिन्नमनस्का स्थिता अस्ति ?'' इति ।

''आर्ये ! किं वदानि ? श्वः श्रीरामस्य राज्याभिषेकः भविष्यति इति श्रूयते । अवगतं खलु ?'' इति अवदत् मन्थरा ।

कैकेयी स्वस्य कण्ठे स्थितं रत्नखचितं हारं निष्कास्य मन्थरायाः कण्ठे अर्पयन्ती - ''अहो, भवती कीदृशीं परमप्रियां विशेषवार्ताम् आनीतवती अस्ति !'' इति उक्त्वा महान्तम् आनन्दं प्रदर्शितवती ।

तदा मन्थरा अवदत् - ''अहो, कीदृशी मूर्खता भवत्याः !'' इति ।

''मन्थरे ! किं वदन्ती अस्ति भवती ?'' इति अपृच्छत् कैकेयी ।

''यदि सः रामचन्द्रः राजा भवेत् तर्हि कौसल्यायाः दास्यौ भवतः भवती सुमित्रा च । किम् एतत् कदापि चिन्तितं भवत्या ? अलं विलम्बेन । भवती कोपगृहं प्रविशतु, दशरथमहाराजं वरद्वयं याचतु च । रामस्य पुरतः चामरेण वीजनार्थं किं भरताय जन्म दत्तं भवत्या ?'' इति अवदत् मन्थरा ।

ततः कैकेयी कोपगृहं प्रविष्टवती । एतत् श्रुत्वा दशरथः तत्र आगतः । कैकेयी दशरथम् अवदत् - ''मह्यं वरद्वयं दातव्यम्'' इति ।

''यत् अपेक्षितं तत् याचतु'' इति अवदत् दशरथः ।

''चतुर्दश वर्षाणि रामः वनवासं कुर्यात् । भरतस्य पट्टाभिषेकः प्रवर्तेत । एतदुभयम् इच्छामि अहम्'' इति अवदत् कैकेयी ।

कैकेय्याः एताम् अपेक्षां श्रुत्वा दशरथः महता दुःखेन शय्यायाम् अपतत् ।

'पितुः आज्ञापालनं मम कर्तव्यम् । वचनपालनं कर्तुं न शक्तम् इत्येषा अपकीर्तिः मम पितुः न भवेत् । रघुवंशे अद्यावधि केनापि वचनभङ्गः न कृतः । अग्रे अपि एवं न भवेत्' इति अचिन्तयत् रामः । अतः सः वल्कलं धृत्वा वनवासं प्रति गमनाय सन्नद्धः जातः ।

एतदवसरे एव नितरां क्रुद्धः लक्ष्मणः तत्र आगतवान् । सः कैकेय्याः दशरथस्य च संहाराय खड्गम् उन्नीतवान् । तदा रामः तं बोधयित्वा तदीयं कोपं शमितवान् ।

एतदनन्तरं रामः सीता लक्ष्मणः च वनं प्रति निर्गतवन्तः । अयोध्याजनाः तेषां मार्गेषु शयानाः मार्गावरोधं कृतवन्तः । रामः तान् अपि बोधयित्वा सान्त्वयित्वा च अग्रे गतवान् ।

गङ्गाम् अतिक्रम्य अरण्यमार्गेण गच्छन् सः भारद्वाजाश्रमं प्राप्तवान् । रामः लक्ष्मणः च वटवृक्षस्य रसेन केशान् आर्द्रीकृत्य मुनयः इव जटां रचितवन्तौ ।

सचेतनतां गतः दशरथः वनवासाय रामस्य निर्गमनं श्रुत्वा नितरां शोकाकुलः जातः । रामनाम जपन् एव सः प्राणान् अत्यजत् ।

तदवसरे भरतः नन्दिग्रामे मातुलगृहे आसीत् । नन्दिग्रामतः आगतौ भरतः शत्रुघ्नः च दशरथस्य उत्तरक्रियां निर्वर्तितवन्तौ ।

भरतः मातुः मुखम् अपि द्रष्टुं न ऐच्छत् । शत्रुघ्नः मन्थरां प्रहर्तुम् ऐच्छत् । किन्तु सा कुत्रापि न दृष्टा तेन ।

भरतः श्रीरामं प्रत्यानेतुम् इच्छन् परिवारसहिततया अरण्यं प्रति प्रस्थितवान् ।

अरण्ये रामः भरतम् अवदत् - ''पितुः वचनस्य पालनं भवतः अपि धर्मः । भवान्



मम अनुजः अस्ति । अतः मम आदेशः अपि भवता पालनीयः । भवान् इतः प्रतिगत्य राज्यं परिपालयेत् इति मम अपेक्षा'' इति ।

तदा भरतः - ''अस्तु नाम । किन्तु अहं राज्यं पालयिष्यामि भवतः सेवकत्वेन प्रतिनिधित्वेन च'' इति उक्त्वा श्रीरामस्य पादुके स्वीकृत्य ततः निर्गतवान् ।

एतदनन्तरं रामः सीतालक्ष्मणाभ्यां सह अरण्यस्य मध्यभागं प्रति गतवान् ।

खरः दूषणः च दण्डकारण्ये रावणस्य प्रतिनिधी आस्ताम् । ताभ्यां विन्ध्याचलस्य पार्श्ववर्तिनी समग्रा भूमिः वशीकृता आसीत् । राक्षसगणेन सह सञ्चरन्तौ तौ अरण्यं प्रविशतः रामादीन् दृष्टवन्तौ ।

नितरां क्रुद्धौ तौ शूलखड्गादीनि आयुधानि गृहीत्वा रामादीनां संहाराय अग्रे आगतौ ।

रामः लक्ष्मणः च निरन्तरबाणप्रयोगेण



राक्षसगणं ततः निवारितवन्तौ । ततः रामः खरदूषणौ संहृतवान् । अन्ये अपि राक्षसाः तेन मारिताः । केचन कथमपि सजीवं तिष्ठन्तः ततः पलायितवन्तः ।

रामः लक्ष्मणः च वने वासाय योग्यस्य स्थलस्य अन्वेषणे मग्नौ आस्ताम् । तदा ताडवृक्षसदृशः कश्चन राक्षसः सीताम् उन्नीय स्कन्धे आरोप्य ततः निर्गन्तुम् उद्युक्तः । तावता एतत् ज्ञातवान् रामः बाणप्रयोगेण तं मारितवान् ।

तस्मात् प्रदेशात् पलायितवन्तः राक्षसाः शूर्पणखां खरदूषणयोः मरणवार्तां निवेदितवन्तः । शूर्पणखा रावणस्य भगिनी । खरदूषणौ तस्याः भ्रातरौ एव । तौ रावणस्य विमातुः पुत्रौ । दण्डकारण्ये निवसतां सर्वेषां राक्षसानाम् अधिनायिका आसीत् शूर्पणखा । भ्रात्रोः मरणं श्रुत्वा क्रुद्धा सा रामलक्ष्मणयोः संहाराय निर्गता ।

पञ्चभिः वटैः उपेतः पञ्चवटीप्रदेशः प्राप्तः रामेण । ततः अनतिदूरे एव 'दक्षिणभारतस्य गङ्गा' इति ख्याता गोदावरी प्रवहति स्म ।

सुन्दरीं पर्णकुटीं निर्माय रामः सीतया लक्ष्मणेन च सह वासम् आरब्धवान् । वनविहारेण समयं यापयति स्म सः । लक्ष्मणः अग्रजस्य भ्रातृजायायाः च सेवां कुर्वन् अहोरात्रं पर्णशालायाः रक्षणं करोति स्म ।

कदाचित् शूर्पणखा रामादीनां पुरतः प्रत्यक्षा जाता । सा रामम् अवदत् - ''भवता अहं परिणेतव्या'' इति । रामः तस्याः प्रार्थनां निराकृतवान् । शूर्पणखा बहुधा अनुरोधं कृतवती । सा सीतायाः संहाराय प्रयत्नम् आरब्धवती । एतत् दृष्ट्वा नितरां क्रुद्धः लक्ष्मणः तस्याः नासिकां कर्णौ च कर्तयित्वा तां ततः प्रतिप्रेषितवान् ।

शूर्पणखा लङ्कां गत्वा आत्मना प्राप्तम् अपमाननं रावणं विस्तरेण निवेदितवती । सीतायाः सौन्दर्यं वर्णयन्ती सा तस्मिन् सीताहरणेच्छाम् उत्पादितवती । प्रतीकारसाधनाय रावणः मारीचं सुवर्णहरिणरूपेण दण्डकारण्यं प्रति प्रेषितवान् ।

सीता तं मायाहरिणं दृष्ट्वा व्यामुग्धा जाता । रामः तं हरिणम् अनुसृत्य गत्वा बाणेन प्रहृतवान् । रामस्य बाणप्रहारं प्राप्य मारीचः स्वस्य वास्तविकं रूपं धृत्वा रामस्य कण्ठस्वरम् एव अनुकुर्वन् - 'हा लक्ष्मण ! हा सीते !' इति उच्चैः आक्रोशनं कुर्वन् प्राणैः वियुक्तः जातः ।

एतं स्वरं श्रुत्वा सीता नितरां भीता । ''एषा राक्षसानां माया । रामस्य कोऽपि अपायः न

जातः'' इति लक्ष्मणः सीतां बहुधा बोधितवान् । किन्तु सीता तस्य वचने विश्वासं न प्राप्तवती । सा लक्ष्मणं कठोरैः वचनैः बहुधा निन्दितवती । तदा अनन्यगतिकः लक्ष्मणः कुटीरस्य पुरतः तिस्रः रेखाः विलिख्य - 'एताः रेखाः न अतिक्रमणीयाः' इति संसूच्य रामस्य अन्वेषणाय ततः निर्गतवान् ।

कुटीरे सीता एका एव आसीत् । तदवसरे रावणः वृद्धतपस्विवेषेण तत्र आगत्य भिक्षां याचितवान् । भिक्षायाः दानाय सीता लक्ष्मणेन लिखिताः रेखाः अतिक्रम्य गतवती । तदा रावणः ताम् उन्नीय ततः पलायितवान् ।

रामः लक्ष्मणः च सर्वत्र सीतायाः अन्वेषणं कृतवन्तौ । रामः सामान्यः मानवः इव बहुधा विलपनम् अकरोत् ।

अरण्ये अन्वेषणसमये कर्तितपक्षः जटायुः ताभ्यां दृष्टः । जटायुः रामम् उद्दिश्य - ''मया रावणात् सीतायाः मोचनाय बहुधा प्रयासः कृतः । तदा रावणः मम पक्षौ कर्तयित्वा दक्षिणदिशि गतवान्'' इति उक्त्वा तत्रैव प्राणान् अत्यजत्

जटायुषः अन्त्यक्रियां समाप्य रामलक्ष्मणौ ततः अग्रे प्रस्थितवन्तौ । तदा कबन्धः नाम राक्षसः स्वस्य दीर्घाभ्यां बाहुभ्यां रामलक्ष्मणौ गृहीत्वा आकृष्टवान् ।

कबन्धः कश्चन विलक्षणः जीवी । तस्य उदरं पर्वताकारकम् । दंष्ट्रोपेतम् अपिहितं मुखम् । अग्निगोलसदृशे नेत्रे । योजनपर्यन्तम् अपि प्रसरन्तौ हस्तौ । तस्य न आसीत् शिरः, न पादौ, न वा अन्यानि अङ्गानि ।

रामः लक्ष्मणः च खड्गेन प्रहृत्य तदीयौ बाहू कर्तितवन्तौ । कबन्धः शापवशात् एतादृशं



रूपं प्राप्तवान् गन्धर्वः आसीत् । सः शापात् मुक्तिं प्राप्य स्वस्य लोकं गच्छन् अवदत् - ''अग्रे वानराणां मैत्री प्राप्स्यते । तस्मात् हितं सेत्स्यति'' इति ।

ऋष्यमूकपर्वते वानरवीरैः सह निवसन् सुग्रीवः रामसमीपं हनुमन्तं प्रेषितवान् ।

त्रिकोटिसङ्ख्याकाः देवाः वानररूपं प्राप्तवन्तः आसन् । हनूमतः जन्म शिवस्य अंशात् जातम् आसीत् । वायुदेवस्य अनुग्रहात् अञ्जनादेवी हनूमन्तं प्रसूतवती आसीत् । वायुपुत्रत्वेन ख्यातः आसीत् हनूमान् । 'मारुतिः' इत्यपि नाम आसीत् तस्य ।

बाल्ये एव सः सूर्यबिम्बं फलविशेषं मत्वा तस्य ग्रहणाय गतः आसीत् । तदा कुपितः इन्द्रः वज्रायुधेन तं प्रहृतवान् आसीत् । तेन आञ्जनेयः मूर्च्छां गतः । तस्मात् कुपितः वायुदेवः स्वस्य सञ्चारं स्थगितवान् । तदा देवाः विविधान् वरान् दत्त्वा उक्तवन्तः यत् एषः आञ्जनेयः चिरञ्जीवी भविष्यति इति ।

सुग्रीवस्य आदेशस्य अनुसारं हनूमान् ब्रह्मचारिवेषेण रामस्य समीपं गतवान् । तं दूरात् एव दृष्ट्वा रामः लक्ष्मणम् अवदत् - ''अहो, सुन्दराकारकस्य एतस्य कर्णयोः कुण्डले विशेषतः शोभेते'' इति ।

एतेन रामं विष्णुवंशोपेतम् अवगतवान् हनूमान् तस्य विश्वासपात्रभूतः सेवकः जातः । रामेण सुन्दरत्वेन निर्दिष्टः हनूमान् वस्तुतः अपि सुन्दरः जातः ।

हनूमतः कारणतः सुग्रीवरामौ अग्निसाक्षितया सुहृदौ जातौ ।

सुग्रीवस्य भ्राता वाली किष्किन्धायाः राजा आसीत् । अनुजस्य विषये मिथ्याभावनां प्राप्य तस्य मारणाय सः प्रयासं कृतवान् । एतस्मात् सुग्रीवः ऋष्यमूकपर्वतं शरणं गतवान् । वाली अनुजस्य पत्नीं कारागारे अस्थापयत् ।

विपद्ग्रस्तस्य मित्रस्य रक्षणं स्वस्य कर्तव्यं भावयन् रामः सुग्रीवाय वचनं दत्तवान् यत् मया वालिनः वधं कृत्वा भवते किष्किन्धायाः सिंहासनं दाप्यते इति ।

यः पुरतः युद्धाय तिष्ठति तस्य शक्तेः अर्धभागः वालिना प्राप्यते स्म । अतः एव वालिसुग्रीवौ यदा युद्धं कुर्वन्तौ आस्तां तदा वृक्षस्य पृष्ठतः स्थित्वा रामः उपायेन वालिनं हतवान् ।



# कोरियादेशस्य काचन पौराणि्.ी कथा

कयोश्चन दम्पत्योः जिनूहः नाम एकमात्रपुत्रः आसीत् । तस्य पुत्रस्य सेवार्थं मातापितरौ कञ्चन वृद्धं सेवकत्वेन नियोजितवन्तौ । तस्य सेवकस्य नाम वान्क्यूनः इति । सः अनेकविधाः कथाः जानाति स्म । कथानां खनिरेव सः । तासु कथासु भयजनिकाः नागानां कथाः, क्रूरव्याघ्राणां कथाः चैव अधिकाः । किन्नरीणां, राजकुमारीणां, राजकुमाराणाम्, उत्तमराजानां च कथाः अपि काश्चन तत्र आसन् ।

तेन कथ्यमानासु कथासु सर्वासु अपि एकः प्रेतात्मा भवति स्म एव । एताः कथाः अन्यैः न श्रोतव्या इति जिनूहस्य इच्छा । मित्राणि अपि ताः कथाः न वदति स्म सः । सेवकः अपि मित्राणां पुरतः कथां न कथयेत् इति तस्य इच्छा आसीत् । अस्य परिणामतः कथासु स्थिताः प्रेतात्मानः बन्धिनः सञ्जाताः ।



कथावाचकः सः सेवकः वान्क्यूनः एकं चर्मस्यूतं निर्माय तस्य कण्ठे बन्धनाय एकां रज्जुमपि योजितवान् । एषः स्यूतः जिनूहस्य शयनप्रकोष्ठे भित्तौ लम्बितः आसीत् । प्रतिदिनं रात्रौ यदा जिनूहः कथां श्रोतुम् इच्छति तदा सः सेवकः तं स्यूतं स्वस्य अङ्के स्थापयति । कथासमाप्त्यनन्तरं स्यूतस्य कण्ठे स्थितां रज्जुं किञ्चिदिव शिथिलां करोति स्म । स्यूतमुखेन कथायाः प्रेतात्मा अन्तः प्रवेष्टुं यावान् अवकाशः अपेक्षितः तावत् उद्घाटयति स्म सः । सा कथा पुनः अन्येन श्रुता चेदेव प्रेतात्मा बहिः आगन्तुं शक्नुयात्, न अन्यथा । कथासमाप्त्यनन्तरं सेवकः स्यूतस्य मुखं पुनरपि बद्ध्वा भित्तौ लम्बयति स्म ।

एष क्रमः बहूनि दिनानि यावत् प्रवृत्तः । मासाः गताः । वर्षाणि अपि अतीतानि । कथाकथनं तु निरन्तरं प्रवर्तमानम् आसीत् । तावन्ति वर्षाणि अपि सः सेवकः स्वेन उक्तं कथां द्वितीयवारं कमपि न उक्तवान् एव । अतः स्वस्य मुक्तिविषये आशा एव न




आसीत् तेषां प्रेतात्मनाम् । जिनूहः वान्क्यूनः च कथायाः श्रवणे कथने च तथा आसक्तौ भवतः स्म यत् तेषां प्रेतात्मनां दुःखं सङ्कटं च ज्ञातुम् एव तौ समर्थौ न जातौ ।

जिनूहः इदानीं पञ्चदशवर्षीयः अभवत् । कोरियादेशे एतत् वयः विवाहयोग्यम् इति चिन्तयन्ति स्म । अतः जिनूहस्य मातापितरौ सुन्दरीं कन्यां काञ्चित् अन्विष्टवन्तौ । मिनूजीनामिका सा कस्यचन वणिजः पुत्री ।

विवाहः निश्चितः ! विवाहदिने प्रातः एव पिता वधूगृहं गन्तुं सन्नद्धः आसीत् । अन्ये केचन बन्धवः गृहे एव स्थितवन्तः वध्वाः स्वागताय सन्नाहं कर्तुम् ।

सेवकः वान्क्यूनः इदानीं वृद्धः । अतः सोऽपि गृहे एव स्थितः । गृहे सर्वत्र सन्नाहं परिशीलयन् सः जिनूहस्य शयनगृहं प्रविष्टः । तस्मिन् प्रकोष्ठे तेन केषाञ्चन वार्तालापः श्रुतः । किन्तु प्रकोष्ठे कोऽपि न आसीत् । अतः सः सेवकः महत्या जागरूकतया सर्वत्र परिशीलितवान् । अकस्मात् तस्य दृष्टिः भित्तौ स्थिते चर्मस्यूते पतिता । स स्यूतः कम्पमानः इव तेन लक्षितः । तेन अनुमितं यत् तस्मात् स्यूतात् एव शब्दः निर्गच्छन् अस्ति इति । वान्क्यूनः स्यूतसमीपम् आगत्य कर्णौ दत्त्वा वार्तालापं श्रोतुं प्रयासं कृतवान् । प्रेतात्मनां वार्तालापः एवं प्रचलति स्म ।

''बालकस्य विवाहः अद्य सम्पद्यमानः अस्ति । अस्मान् बद्धवान् अस्ति सः । अतः प्रतीकारः अस्माभिः करणीयः एव । तं वयं मारयाम । तस्य मरणानन्तरं यः कोऽपि एतं स्यूतम् उद्घाटयिष्यति एव । ततः वयं मुक्ताः भविष्यामः'' इति एकेन उक्तम् ।

''योग्यं चिन्तनम् एतत् । किन्तु तस्य मारणाय कः उपायः ?'' इति अपृच्छन् अन्ये प्रेतात्मानः ।

तदा कश्चित् प्रेतात्मा - ''अहं विषमय-कूपस्य प्रेतात्मा अस्मि । अहं तस्य प्रयाण-मार्गे कूपं स्थापयिष्यामि । सः तु जलं पातुं तत्र आगमिष्यति एव । ततः तेन जलं पीत्वा मरणं प्राप्यते ... हा हा हा'' - इति उक्त्वा हसितवान् ।

''योग्यः उपायः । यदि सः मार्गे जलं न पास्यति तर्हि अहं तं मारयिष्यामि । यतः अहं विषमयफलस्य कथायाः प्रेतात्मा अस्मि । जिनूहः येन मार्गेण गच्छति तस्मिन् मार्गे अहं वृक्षस्य अधोभागे एव लम्बमानः स्थास्यामि । फलरूपिणं मां सः यथा खादेत्

तथा करिष्यामि'' इति अन्येन प्रेतात्मना उक्तम् ।

''यदि सः वधूगृहगमनपर्यन्तम् अपि जलपानं विना फलखादनं विना च गच्छेत् तर्हि मम कथायाम् आगतां तीक्ष्णच्छुरिकाम् अहं वधूगृहस्य पुरतः प्रसारितस्य स्वागत-कटस्य अधः स्थापयिष्यामि । वरः यदा तदुपरि पदं स्थापयिष्यति तदा पादभङ्गं प्राप्य मरणं प्राप्स्यति'' इति अवदत् अन्यः ।

''यदि सः अनेनापि मृतः न भविष्यति तर्हि मम कथायां स्थितं सर्पम् अहं वध्वाः शय्यायाः अधोभागे स्थापयिष्यामि । रात्रौ वरं सः सर्पः दशेत् एव ! तदा तु तस्य मरणं निश्चितमेव'' इति अपरः प्रेतात्मा उक्तवान् ।

तत् श्रुत्वा अन्ये सर्वे प्रेतात्मानः - 'युक्तम् एतत्' इति एकस्वरेण उक्तवन्तः ।

वृद्धः वान्क्यूनः एतत् सर्वं श्रुतवान् । स्वामिभक्तः सः तस्मिन् बालके विशेष-प्रीतिमान् आसीत् । अतः इदानीं तस्य मनसि भीतिः उत्पन्ना । तेन ज्ञातमेव आसीत् यत् प्रेतात्मानः स्यूतेषु बद्धाः सन्तः अपि दुष्ट-कार्याणि कर्तुं कारयितुं च समर्थाः इति ।

अतः सः स्वामिसमीपं गत्वा उक्तवान् - ''श्रीमन् ! अद्य शुभदिनम् । अतः मम काचन इच्छा अस्ति यत् मया अपि वरस्य अश्वस्य अनुसरणं करणीयम् इति'' इति ।

स्वामी तु 'भवतु' इति उक्तवान् ।

वान्क्यूनस्य सन्तोषस्य पारमेव न आसीत् ! तस्य कारणं - विवाहे मया उत्तमं स्थानं प्राप्तम् इति न, अपि तु मार्गे वरस्य जिन्हस्य ये अपायाः जायमानाः सन्ति तेभ्यः तं रक्षितुम् अवकाशः लब्धः इति ।

वान्क्यूनस्य मनसि या भीतिः आसीत् तथैव प्रवृत्तम् मार्गे जिन्हः कञ्चन कूपं दृष्ट्वा जलं पातुम् इष्टवान् । सेवकः वान्क्यूनः तम् उक्तवान् - ''वत्स ! जलस्य उद्धरणाय कश्चन समयः आवश्यकः एव । तावता भवान् स्विन्नः भवेत् । यतः आतपः तीव्रः अस्ति ! स्वेदकारणतः भवतः वेषादिकं मलिनं भवेत्'' इति ।

जिन्हः यद्यपि पिपासितः तथापि सेवक-वचने सत्यांशः अस्ति इति विचिन्त्य सः अश्वम् अग्रे चालितवान् । किञ्चिद्दूरं यदा गतं तदा पक्वैः फलैः युक्तः कश्चन वृक्षः तेन दृष्टः । तदा सः सेवकम् उक्तवान् - ''अस्य फलस्य खादनेन मम पिपासा शान्ता भवेत् । मधुराणि तानि फलानि आनयतु'' इति ।

सेवकः चिन्तामिश्रितेन स्वरेण उक्तवान् - ''आर्य ! भवतः विवाहः अद्य सम्पत्स्यते ।



भवान् अद्य मार्गे लब्धं फलं खादति चेत् तद् उचितं न'' इति ।

जिन्हेन विना प्रतिवचनं स्वस्य अश्वः अग्रे प्रेरितः ।

किञ्चित्कालानन्तरं ते वधूगृहं प्राप्तवन्तः। उभौ सेवकौ सम्भ्रमेण आगत्य वरस्य पादस्थापनाय दुकूलस्य तल्पम् अधः स्थापितवन्तौ ।

वान्क्यूनः झटिति तत् तल्पं ततः निष्कास्य - ''एतत् तल्पं चिक्कणमयम् अस्ति । यदि वरः अत्र पादौ स्थापयेत् तर्हि स्खलनं प्राप्य निश्चयेन पतेत् । गच्छन्तु, दारुमयम् अपरम् आसन्दम् आनयन्तु'' इति अज्ञापितवान् ।

एतत् श्रुत्वा सर्वे आश्चर्यचकिताः । केनचित् दारुमयः आसन्दः झटिति आनीतः । वान्क्यूनसाहाय्येन जिन्हः अश्वात् अवातरत् ।

विवाहोत्सवः कस्मिंश्चित् उद्याने आयोजितः आसीत् । अमूल्यैः आभरणैः अलङ्कृता वधूः सखीभिः सह आगत्य विवाहवेदिकाम् आरूढवती । विवाहः सवैभवं सम्पन्नः । विवाहशोभां वर्धयितुं नृत्यादिकं सम्पन्नम् । रात्रिः सञ्जाता । वधूवरौ शयनगृहं प्रवेष्टुम् उद्युक्तौ ! तदा छुरिकामेकां स्वीकृत्य वान्क्यूनः धावन् आगतः ।



'किम् अभवत् ?' इति पृच्छन्तः सर्वे: आश्चर्येण पश्यन्तः एव आसन् । तावति काले वान्क्यूनः शय्यायाः उपरि आच्छादितं वस्त्रं निष्कास्य अधः स्थितं सर्पं मारितवान् । सर्वे आश्चर्येण स्तब्धाः ।

जिन्हः पितरम् उक्तवान् - ''अहा, एतेन वान्क्यूनेन मम प्राणाः रक्षिताः अद्य । यदि एषः न स्यात् तर्हि एतावता अहं प्राणैः वियुक्तः अभविष्यम्'' इति ।

वान्क्यूनः पुनरेकं दिनं तत्रैव उषितवान् । अनन्तरदिने वधूवरौ गृहं प्रति आनायितवान् । सर्वेऽपि महान्तम् आनन्दम् अनुभूतवन्तः ।

वान्क्यूनः वधूवरौ शयनगृहं नीत्वा - ''ह्यः भवतः विषये मया प्रदर्शितः व्यवहारः विचित्रः इव अभासत इति मन्ये । तस्य कारणम् इदानीम् अहं कथयामि'' इति वदन् प्रेतात्मनां सम्भाषणं सर्वं विस्तरेण श्रावितवान् ।

तदा वधूः अग्रे किं करणीयमिति मनसि विचिन्त्य पतिम् उक्तवती - ''महोदय ! अद्य आरभ्य भवता माम् उद्दिश्य प्रतिदिनम् एका कथा वक्तव्या । ततः कथायाः सर्वे प्रेतात्मानः एकैकशः मुक्तिं प्राप्नुवन्तु नाम'' इति ।

# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन



अधस्तनकथा पठ्यताम् –

वृद्धस्य जगन्नाथस्य पुत्रः स्नुषा च कस्यचित् साङ्क्रमिकरोगस्य कारणतः दिवं गतौ । अतः पौत्रयोः पोषणभारः जगन्नाथस्य उपरि आपतिता । पौत्रौ योग्येन क्रमेण वर्धनीयौ इति चिन्तयन् जगन्नाथः एतद्विषये मित्रस्य जगन्मोहनस्य साहाय्यं प्रार्थितवान् । बालयोः योग्यतां परीक्षितुम् इच्छन् जगन्मोहनः कदाचित् तौ स्वसमीपम् आहूय अपृच्छत् – ''भगवान् भवतोः पुरतः प्रत्यक्षीभूय स्वसुखजीवनाय यत् इच्छतः तत् प्रार्थयताम् इति यदि वदेत् तर्हि भवद्भ्यां किं प्रार्थ्येत ?'' इति ।

बालाभ्यां यत् उक्तं तत् श्रुत्वा जगन्मोहनः जगन्नाथम् अवदत् – ''एताभ्याम् उक्तं भवता श्रुतं खलु ? भाविनि काले भवान् ज्येष्ठाय गृहं कृषिक्षेत्रं च ददातु । कनिष्ठस्य विषये भवता विशेषतः किमपि चिन्तनीयं नास्ति । यत्र गम्यते तत्र उत्तमं जीवनं कर्तुम् अर्हति सः'' इति ।

- ताभ्यां बालाभ्यां किम् उक्तं स्यात् इति चिन्तयन्ति भवन्तः ?
- जगन्मोहनेन यत् उक्तं तस्य आधारः कः ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् –**

**अन्तिमः दिनाङ्कः – ३१, डिसेम्बर् – २००४**

नाम ------------------------ वयः --------- जन्मदिनाङ्कः ----------

विद्यालयः ------------------------------------ कक्ष्या ----------

गृहसङ्केतः ----------------------------------------------------

-----------------------------------------------------------------

------------------------------ Pincode ----------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# कृष्णपक्षिणः शापविमोचनम्

मालविकपुरनामके राज्ये स्थिते अभयारण्ये किञ्चन मनोहरं कुटीरम् अस्ति । पौत्र्या चन्द्रहासिन्या सह वीरभद्रनामकः कश्चन वृद्धः तत्र निवसति । चन्द्रहासिनी षोडशवर्षीया । बाल्यात् आरभ्य सा पितामहेन सह तत्रैव निवसति । अरण्यप्रदेशस्य समग्रः परिचयः तस्याः अस्ति । अरण्ये स्थितैः प्राणिभिः सह स्नेहेन व्यवहरति सा ।

चन्द्रहासिनी पितामहे विशेषतः स्निह्यति । कदाचित् वार्तालापावसरे सा पितामहं पृष्टवती - ''आवाम् एतस्मिन् अरण्ये किमर्थं निवसावः ?'' इति ।

''वत्से ! अहं पूर्वं मालविकपुरराज्यस्य राज्ञः धीरसिंहस्य सारथिः आसम् । कदाचित् प्रतिवेशिराजः चित्रवर्णः हठात् आक्रमणं कृतवान् । चित्रवर्ण-धीरसिंहयोः महत् युद्धं प्रवृत्तम् । युद्धे चित्रवर्णेन क्षिप्तेन भल्लेन अस्माकं महाराजः व्रणितः । यद्यपि युद्धे महाराजस्य एव जयः जातः, तथापि सारथेः मम अनवधानात् एव व्रणः अभवत् इति चिन्तयन् राजा मां नगरात् निष्कासितवान् । भवत्याः मातापितरौ बाल्ये एव दिवं गतौ खलु ? अतः ततः आरभ्य अहं भवत्या सह अत्रैव अरण्ये निवसामि'' इति विवृतवान् वीरभद्रः ।

एकदा चन्द्रहासिनी स्वस्य कुटीरस्य पुरतः प्रेङ्खायाम् उपविश्य क्रीडन्ती कञ्चित् कृष्ण-पक्षिणं दृष्टवती ।

चन्द्रहासिनी तस्य समीपं गत्वा हस्तेन तम् उन्नीतवती । तदा तया ज्ञातं यत् तस्य पक्षस्य अधः व्रणः जातः अस्ति इति ।

चन्द्रहासिनी तस्य पक्षिणः व्रणम् औषधेन लिप्त्वा आहारव्यवस्थामपि कृतवती । परेद्यवि एव तस्याः उपचारेण स्वस्थः सः पक्षी तां कृतज्ञतापूर्णया दृष्ट्या अपश्यत् ।

केषुचिदेव दिनेषु पक्षिणः व्रणः सम्पूर्णतया उपशान्तः । एतदभ्यन्तरे पक्षिचन्द्रहासिन्योः स्नेहः गाढतया प्रवृद्धः आसीत् ।

कदाचित् महाराजः धीरसिंहः कैश्चित् सैनिकैः सह तत् कुटीरम् आगतः । तस्मिन् समये वीरभद्रः कार्यवशात् कुटीरे नासीत् । धीरसिंहः चन्द्रहासिनीं पृष्टवान् - ''वत्से ! एतम् अरण्यप्रदेशं भवती सम्यक् जानाति किम् ?'' इति ।

चन्द्रहासिन्या ऊहितं यत् एषः महाराजः एव स्यात् इति । अतः सा उक्तवती - ''महाराज ! समग्रम् अरण्यप्रदेशं सम्यक् एव जानामि'' इति ।

''मम कथनं विनैव भवत्या ऊहितं यत् अहं महाराजः एव इति । अहं महाराजः धीरसिंहः अस्मि । केभ्यश्चित् दिनेभ्यः पूर्वं मम ज्येष्ठः पुत्रः मृगयार्थं एतत् वनम् आगतः । तस्मिन् समये कस्यचित् वृक्षस्य अधः तपस्यतः ऋषेः शिरसि कश्चन सैनिकः मृतं कृष्णपक्षिणं स्थापितवान् । एतस्मात् कुपितः ऋषिः यदा नेत्रे उद्घाटितवान् तदा मम पुत्रः तस्य पुरतः स्थितः आसीत् । सः ऋषिः मम पुत्रम् एव अस्य अकार्यस्य कर्तारं विचिन्त्य किमपि अविचार्य स्वमन्त्रशक्त्या तं कृष्णपक्षिणं कृतवान् । सैनिकद्वारा एतां वार्तां ज्ञातवान् अहं तं पक्षिणम् अन्विष्यन् एतत् अरण्यम् आगतः'' इति उक्तवान् राजा धीरसिंहः ।

तदा चन्द्रहासिनी - ''महाराज ! तं कृष्ण-पक्षिणम् अहं न केवलं दृष्टवती, अपि तु व्रणितं तम् औषधोपचारेण स्वस्थं कृतवती अस्मि अपि । सः अत्रैव कुत्रापि स्यात्'' इति वदन्ती सा करताडनं कृतवती ।

अपरस्मिन् एव क्षणे सः कृष्णपक्षी उड्डयनं कुर्वन् आगत्य चन्द्रहासिन्याः स्कन्धे उपविष्टः ।




तं दृष्ट्वा महाराजः पुत्रप्राप्त्या इव महान्तं सन्तोषम् अनुभूतवान् ।

ततः चन्द्रहासिनी पृष्टवती - ''प्रभो ! अस्य राजकुमारस्य पूर्वतनरूपप्राप्त्यर्थं कः उपायः ?'' इति ।

''पुत्रि ! एतमेव विषयं वक्तुम् अहम् उद्युक्तः । येन ऋषिणा शापः दत्तः सः मया दृष्टः, निवेदितः च यत् अपराधी मम पुत्रः न, अपि तु अन्यः कश्चन अहङ्कारी सैनिकः इति । तदा 'विना कारणं मया राजकुमारः दण्डितः' इति ऋषिः अनुकम्पया युक्तः सन् मन्त्रजलं मह्यं दत्त्वा उक्तवान् - 'यः विनापराधं भवता दण्डितः, सः एतेन जलेन राजकुमारं यदि प्रोक्षेत् तर्हि एषः निजरूपं प्राप्स्यति' इति'' इति उक्तवान् महाराजः ।

तदा बहुधा सन्तुष्टा चन्द्रहासिनी उक्तवती

- ''प्रभो, तर्हि समस्यायाः परिहारः विनायासं लब्धः इव'' इति ।

राजा चन्द्रहासिन्याः वचनस्य तात्पर्यं न ज्ञातवान् एव । अतः सः पृष्टवान् - ''कथम् एतत् ?'' इति ।

''महाराज ! मम पितामहः वीरभद्रः भवतः रथस्य सारथिः आसीत् । अहं तस्य पौत्री । मम नाम चन्द्रहासिनी इति । युद्धे यदा शत्रुः भल्लेन भवन्तं व्रणितं कृतवान् तदा भवान् अविमृश्य मम पितामहं नगरात् निष्कासितवान् । किन्तु मम पितामहः स्वदेशं राजानं च बहुधा इच्छति । देशविषये भवतः विषये च तस्य इतोऽपि अचला श्रद्धा वर्तते एव । विना कारणं भवता दण्डितः मम पितामहः । अतः तेनैव तत् मन्त्रजलप्रोक्षणं कारयतु'' इति उक्तवती चन्द्रहासिनी ।

तदा एव बहिर्भागात् आगतः वीरभद्रः महाराजं दृष्ट्वा झटिति तं नमस्कृत्य सर्वं विषयं ज्ञात्वा तेन मन्त्रजलेन पक्षिणं प्रोक्षितवान् । तदनन्तरक्षणे एव राजकुमारः जयसिंहः स्वस्य वास्तविकं रूपं प्राप्तवान् ।

महता सन्तोषेण महाराजः वीरभद्रम् उक्तवान् - ''वीरभद्र ! विना कारणं भवान् नगरात् निष्कासितः इति अहं बहुधा दुःखम् अनुभवामि'' इति ।

तदा वीरभद्रः सविनयम् उक्तवान् - ''प्रभो ! तदा यः दण्डः भवता मह्यं दत्तः स एव इदानीं राजकुमारस्थितिविमोचने वरः सञ्जातः ! मम इतोऽपि अधिकस्य सन्तोषस्य विषयः कः अन्यः स्यात् ?'' इति ।

ततः जयसिंहः पितरम् उक्तवान् - ''यदा पक्षिरूपेण आसं तदा चन्द्रहासिनी मां महत्या प्रीत्या महता आदरेण च रक्षितवती । यदि भवतः वीरभद्रस्य च अनुज्ञा स्यात् तर्हि अहं चन्द्रहासिनीं परिणेतुम् इच्छामि'' इति ।

''आदौ चन्द्रहासिनीं पृच्छतु भवान् - सा भवतः परिणयम् अङ्गीकुर्यात् उत न इति'' इति राजा हसन् पुत्रम् उक्तवान् ।

चन्द्रहासिनी लज्जया शिरः अवनमय्य राजकुमारम् एव कटाक्षेण पश्यन्ती पितामहस्य पृष्ठतः गत्वा स्थितवती ।

ततः मासाभ्यन्तरे एव राजकुमारः जयसिंहः योग्ये विवाहमुहूर्ते चन्द्रहासिनीं परिणीतवान् ।



# आर्यः

हननप्रयासेन वनवासेन च पीडितस्य शान्तिदेवस्य मरणकाले अपि सन्तोषः नाम मम पुत्रः जयानन्दस्वामिनः आश्रमे वर्धमानः अस्ति इति । जयानन्दः वसन्तस्य साहाय्येन शान्तिदेवस्य अन्तिमसंस्कारं निर्वर्तितवान् । वसन्तराजकुमारयोः मेलनम् अभवत् । तयोः मैत्री अपि प्रवृद्धा ।

## राजकुमारस्य अज्ञातं रहस्यम्

चित्रम् - गान्धि-अय्यः

जयानन्दः वसन्तः च आश्रमम् आगच्छतः ।

सः अस्माकम् आन्दोलनस्य प्रमुखः आधारः आसीत् ।

राज्ञः मरणस्य वार्ता केनापि ज्ञातव्या नास्ति ।

भवता मन्त्री मानवेन्द्रः अवश्यं मेलनीयः । सः भवतः मार्गदर्शनं करिष्यति ।

अमृतपुर्यां वसति सः ।

वसन्त ! मया एतस्य नाम 'आर्य' इति कृतम् अस्ति ।

राजकुमार ! एषोऽहं भवन्तम् अभिवादये ।

मां 'राजकुमारः' इति मा वदतु । अहं भवतः सुहृत् अस्मि ।

कानिचन दिनानि आन्दोलनं स्थगितं भवतु । आर्यः अत्रैव वर्धताम् । राज्यस्य गतिविधीन् काले काले मां वदतु नियततया ।

मम अनुयायिनां का गतिः भवेत् ऋषिवर्य ?


ते सर्वे अमृतपुरीं गच्छन्तु । राज्ञः मरणवार्ता मानवेन्द्रेण अपि ज्ञातव्या नास्ति ।
सर्वम् अवगत मया । कृपया गमनाय अनुज्ञातव्यः अहम् ।
एतत् तायकं भवन्तं रक्षिष्यति वसन्त !


अत्रान्तरे वसन्तस्य अनुयायिनः भू-स्वामिभ्यः तण्डुलान् वशीकुर्वतः वीरसिंहस्य सैनिकानां सर्वान् प्रयासान् विफलीकुर्वन्ति । एतस्मात् वीरसिंहस्य क्रोधः वर्धते ।
शकटाः न अवरुध्यन्ताम् । एषा राज्ञः आज्ञा ।
श्रीमन् ! अस्माकम् आहारः न नीयताम् । वयं मृताः स्याम ।


वीरसिंहविरुद्धे आन्दोलने वयं भवतः साहाय्यं करिष्यामः ।
अस्माभिः सम्भूय कार्यं करणीयम् ।
वसन्तस्य कापि वार्ता अस्ति किम् ?
बहवः तस्य साहाय्यम् आचरन्तः सन्ति गुरुवर्य !
वसन्तः क्व ? एषु दिनेषु सः न दृष्टः एव !
स्वस्य आन्दोलने भागः वोढव्यः इति अस्मान् वदन् अस्ति सः ।


मम मित्रस्य कापि हानिः न स्यात् ।
आर्य ! अपि कुशलम् ?
भ्रातः ! भयान् आगतः एव !
अहम् अमृतपुरीं गतः आसम् । मम सर्वे अनुयायिनः तत्र सकुशलं सन्ति ।
मया अपि भवतः आन्दोलने कदा भागः ग्रहीतुं शक्येत ?
आर्य ! भवान् वयसा प्रौढः भवतु आदौ ।


आर्य ! अस्माकं
पर्वेषां दृष्ट्या भवान्
महत्त्वपूर्णः जनः
भवता पुनः पुनः मेलनीयं मित्र !


वसन्तः प्रजानां हिताय बहूनि कार्याणि करोति । भवान् तेषां नायकः भवतु ।
तेन सह गच्छेयम् इति इदानीम् अपि मम इच्छा ।


आर्यः यथा यथा प्रौढः भवति तथा तथा धनुर्विद्यायाम् अन्यासु युद्ध-विद्यासु च अधिकं प्रावीण्यं सम्पादयितुम् अधिकं प्रयासं करोति । आश्रमस्य शिष्याः तस्य मार्गदर्शनं कुर्वन्ति ।


वीरसिंहः नूतनेन सेनापतिना सह समालोचनं करोति ।
जगत्सिंह ! ते विद्रोहिणः क्व ?
प्रतिदिनम् अपि प्रायः ते स्व-वसतिं परिवर्तयन्ति इति भाति ।


किं ते अस्माकं राज्यं परित्यज्य गताः ? कुत्र गताः स्युः ते ?
वयं पर्वतीयेषु प्रदेशेषु तेषाम् अन्वेषणं कृतवन्तः । सर्वाः गुहाः रिक्ताः तत्र ।


किम् अरण्येषु तेषाम् अन्वेषणं कृतम् ?
महाराज ! अरण्यं निलीय स्थित्यै न योग्यम् । तत्र तेषां वासः न स्यात् ।


वयं भवितव्यमात्रे विश्वासं न कुर्याम । अरण्ये सर्वत्र अन्वेषणं भवतु ।
अहं स्वयं सैन्यस्य नायकत्वं वहामि । एतदर्थं मृगयाव्यवस्थां भवान् कारयतु ।


वीरसिंहः मृगयार्थं निर्गच्छति । सैनिकाः अरण्ये सर्वत्र अभिव्याप्ताः सन्तः वन्यपशूनां धावनाय भेरीप्रभृतीनि वाद्यानि वादयन्ति ।


आर्य ! अद्य आश्रमात् बहिः न गन्तव्यम् ।


व्याघ्र ! व्याघ्रि ! आश्रम विषये अवधानं भवतु ।


भल्लुकी आर्यस्य दर्शनाय निर्गच्छति ।


भल्लुकी गृहीता भवति । सैनिकाः आनन्दनिर्भराः भवन्ति ।


तिष्ठ रे !
कः ? किमर्थम् ?
अनुवर्तते



# भारतीयपत्रालयस्य १५० तमं वर्षम्



सार्धैकशतवर्षेभ्यः पूर्वं भारतीयपत्राचारव्यवस्था स्वतन्त्रसङ्घटनत्वेन परिगणिता, राष्ट्रस्तरीयं प्राधान्यम् अवहत् च । १८५४ तमवर्षस्य पत्रालयविधिः पत्राणां प्रेषणादिनिमित्तं सर्वकारस्य पूर्णाधिकारम् अकल्पयत् ।

१६८८ तमे वर्षे मद्रास्-सुरत्-कलकत्तासु स्वस्य कार्यालयादिकं वहन्त्या 'दि इंग्लीष् ईस्ट् इण्डिया कम्पनी'नामिकया संस्थया मुम्बयीनगरे प्रथमः पत्रालयः प्रतिष्ठापितः । अग्रिमेषु वर्षेषु मद्रास्कलकत्तानगरयोः अपि पत्रालयः आरब्धः । 'धावकानां' द्वारा एतेषां त्रयाणां परस्परसम्पर्काय व्यवस्था उपकल्पिता । १७७४ तमे वर्षे प्रथमः पत्रालयाधीक्षककार्यालयः आरब्धः कलकत्तानगरे । त्रयः अपि पत्रालयाः शुल्कस्वीकारपुरस्सरं जनानां पत्राणां नयनानयनम् आरब्धवन्तः । शतमैलुदूरस्य निमित्तं शुल्कम् आसीत् आणकद्वयम् (१२पैसाः) । एतच्च शुल्कं दातव्यम् आसीत् पत्रस्वीकर्त्रा, न तु पत्रस्य प्रेषयित्रा ।

१८३७ तमवर्षपर्यन्तं त्रयः अपि पत्रालयाः स्वकीयैः एव नियमैः व्यवहरन्ति स्म । १८३७ तमे वर्षे पत्रालयविधिः तेषां व्यवहारे समानरूपताम् अकल्पयत् । १८५० तमे वर्षे त्रिषु अपि पत्रालयेषु पत्रालयाधीक्षकस्थानम् उपकल्पितम् । १८५४ तमे वर्षे नूतनः पत्रालयविधिः पारितः । ततः केन्द्रीयपत्राचाराधिकरणस्य अधीक्षकस्थानम् उपकल्पितं जातम् । पत्रालयमूल्ये समानता, दूरम् अविगणय्य शुल्कस्वीकारव्यवस्था च व्यवहारपथम् आगता । 'शुल्कपट्टिका'याः मुद्रणम् आरब्धम् । प्रेषकेण एव शुल्कं दातव्यम् इत्येषा व्यवस्था अपि आरब्धा ।

१८५४ तमे वर्षे अस्माकं देशे ६५२ पत्रालयाः आसन् । अद्य देशे १५५,००० पत्रालयाः नगरेषु, १४०,००० पत्रालयाः ग्रामेषु च सन्ति । जगति विद्यमाना अतिमहती पत्रालयव्यवस्था एषा । १९४७ तमे वर्षे २३,००० पत्रालयाः आसन् देशे । २००३ तमे वर्षे एतया पत्रालयव्यवस्थया ९,००,००,००,००० पत्राणि प्रापितानि ।

१९११ तमे वर्षे फेब्रवरीमासे १८ दिनाङ्के भारतेन विमानेन अपि पत्राणि नीतानि प्राथम्येन । इतः पूर्वं केनापि देशेन एवं कृतं न आसीत् । अलहाबाद्नैनीनगरयोः मध्ये विमानसञ्चारं कुर्वन् फ्रेञ्चदेशीयः एम्, पिक्येट्नामकः ६५०० पत्राणि आत्मना सह नीतवान् आसीत् ।

# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## भवदर्थं विज्ञानम्

### शितलीभवनकथा

महति घर्मे यदि कोऽपि शीतलं जलं, हिमखण्डोपेतं जलं वा दद्यात् तर्हि महान् आनन्दः खलु भवेत् ?

जलस्यैव कानिचन वैशिष्ट्यानि सन्ति। यदा तापमानं शून्यांशयुक्तं भवति जलं घनरूपं याति। किन्तु प्रवहत् जलं तु तस्मिन् शून्यतापे अपि घनरूपं न प्राप्नोति। प्रवहति जले स्थितः वायुः एव एतस्य कारणम्। वायुकणानां कारणतः शून्यादपि न्यूनः तापः यदा भवति तदैव प्रवहत् जलं घनीभवति। प्रवहत् जलं हिमखण्डान् छेत्तुम् अपि अर्हति। प्रवहत् जलं घनीभूतस्य जलस्य द्रवरूपप्राप्त्यये शक्तिम् अपि प्रददाति।

शीतके स्थापितं जलम् अतिशीतलं भवति चेदपि घनरूपं न प्राप्नोति इत्यंशः भवद्भिः लक्षितः स्यादेव खलु ? तत्र कारणं तत्रत्यस्य तापस्य निग्रहणव्यवस्था। तापः शून्यांशं यथा न प्राप्नुयात् तथा व्यवस्था उपकल्पिता भवति तत्र। तत्रैव घनीकरणविभागे स्थापितं जलं घनीभवति। यतः तस्मिन् भागे तापः शून्यत्वं यथा प्राप्नुयात् तथा व्यवस्थापितं भवति।



## भवतां परिसरः

### लवणसरोवरः



लवणांशाधिक्ययुक्तः सरोवरः अस्ति 'मृतसरोवरः'। सरोवरोऽयं समुद्रायते। इस्रेल-जोर्डान्देशयोः मध्ये अस्ति एषः सरोवरः। सामान्येषु समुद्रेषु जलस्य लवणांशः यावत् भवति ततोऽपि दशगुणितः भवति अत्र। अत्रत्ये जले खनिजांशाः अपि बहवः भवन्ति। अतः एतत् जलम् औषधायते अपि। एतस्मिन् सरोवरपरिसरे जीविनां सद्भावः सर्वथा न दृश्यते। एतस्य उपरि न कोऽपि पक्षी डयमानः दृश्यते। एतस्मात् सरोवरात् जलं न निर्गच्छति। उत्तरजोर्डान्प्रदेशे प्रवहन्त्यः नद्यः एतं सरोवरं प्रति नैरन्तर्येण जलम् आनयन्ति।

समुद्रस्तरात् नितराम् अधः, तन्नाम १३०० पादमिते अधोभागे अस्ति एषः। अत्रत्ये जले २५% लवणांशः दृश्यते। अतः एव अत्रत्यस्य जलस्य उपरि स्थितः शयितः अपि वा कोऽपि मज्जितः न भवति।

औष्ण्याधिक्योपेतस्य वातावरणस्य, जलस्य निरन्तरबाष्पीभवनस्य च कारणतः जोर्डानीयेषु पर्वतप्रदेशेषु सदापि कुज्झटिकामयता दृश्यते।

# पठ्यतां भवताम् पठ्यतां भवताम्

## भवन्तः जानन्ति किम् ?

### चायपेयम् आरोग्याय

चीनदेशीयेन चक्रवर्तिना शेनुनङ्गवर्येण आकस्मिकतया अन्विष्टं पेयम् अद्य जगतः अतिजनप्रियेषु पेयेषु द्वितीयं स्थानं प्राप्तवत् अस्ति । पेयेषु प्रथमं स्थानं तु जलस्य एव । क्रिस्तात् पूर्वं २७३७ तमे वर्षे एव ज्ञातं यत् चायपेयं मानवस्य शरीरे मनसि च कमपि परिणामविशेषं जनयति इति ।



कृष्णवर्णीयं चायचूर्णम् अधिकम् उत्तप्तं भवति । हरितचायचूर्णानि बाष्पेण परिष्कृतानि सम्यक् शोषितानि च भवन्ति । हरितचायस्य पानम् आरोग्याय कल्पते इति परिभाव्यते ।

चायस्थः केफीन्नामकः विषांशः आरोग्यस्य हानिं कल्पयति इति बहूनां भीतिः । किन्तु वस्तुस्थितिः तु एषा यत् काफीचूर्णे यावान् केफीनंशः भवति तस्य त्रिभागमात्रम् एव भवति चायचूर्णे ।

## अभिवर्ध्यतां ज्ञानशक्तिः

### यन्त्रोद्यमसम्बद्धाः प्रश्नाः



१. कः भारतात् उपस्करनयनाय मार्गम् अन्विष्टवान् ?
(अ) मार्को पोलो
(आ) ह्युयेन् त्साङ्ग्
(इ) वास्को ड गाम
(ई) क्रिस्टोफर कोलम्बस्



२. वित्तकोषाणां राष्ट्रियीकरणं कदा सम्पन्नम् ?
(अ) १९५२ तमे वर्षे
(आ) १९६४ तमे वर्षे
(इ) १९६९ तमे वर्षे
(ई) १९७५ तमे वर्षे



३. भारते अत्यधिकप्रमाणेन किम् उत्पाद्यते ?
(अ) सुवर्णम् (आ) तण्डुलः
(इ) अभ्रकम् (ई) अयः



४. भारतीयः रूप्यककागदमुद्रणालयः कुत्र अस्ति ?
(अ) पुणेनगरे
(आ) कोल्कतानगरे
(इ) ग्वालियरे
(ई) नासिकनगरे

(उत्तराणि ७० तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः?**



TAJY PRASAD



SOURA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु – ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'अक्टोबर्'मासस्य चित्रशीर्षिकाप्रेषिका –**

**श्रीमती मीरा रामनाथ**
२३, मैल्स्टोन् अपार्ट्मेण्ट्स्
१४, श्रीरामनगर सौत् स्ट्रीट्, अल्वारपेट्
**चेन्नै – ६०० ०१८**

**पुरस्कृता शीर्षिका**





**बिन्दुसलिलेन सेकः**
**सिन्धुसलिलेन मोदः**

## अभिवर्ध्यतां ज्ञानशक्तिः – उत्तराणि

१. वास्को ड गाम – १४९८
२. १९६९तमे वर्षे
३. अभ्रकम्
४. नासिकनगरे (महाराष्ट्रम्)

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

**CHANDAMAMA** (Sanskrit) **DECEMBER 2004**
Regd No TN/PMG(CCR)-589/03-05
**Regd. with Registrar of Newspaper for India No. 42664/85**
**Licensed to post without prepayment No. 371/03-05 Foreign - WPP. No. 372/03-05**



# न प्रदूषणीयं जलम्

वीणायाः मातुलः नगरात् अनतिदूरे नद्याः तीरे स्थिते रामपुरे निवसति । नद्याः तीरं वीणायाः प्रियं स्थलम् । अतः सदापि विरामदिनानि रामपुरे एव यापयितुम् इच्छति सा । मातुलस्य गृहं प्राप्तवती सा मातुलपुत्राणां तिवेशिबालानां च गणेन सह नदीतीरं प्रति धावति सदापि ।



वर्षद्वयात्मकस्य दीर्घ-कालस्य अनन्तरम् इदानीं वीणा मातुलस्य गृहं प्रति गच्छन्ती अस्ति । तत्र गतया तया महान् आघातः प्राप्तः । यतः तत्रत्या नदी इदानीं नष्टवैभवा जाता दृश्यते । एतत् ज्ञातवत्याः वीणायाः अवर्णनीयः खेदः ।

रामपुरे नद्याः तीरे यदा वस्त्रनिर्माण-यन्त्रागारम् आरब्धं तदा एव नद्याः शोकगाथा अपि आरब्धा । यन्त्रागारस्य मालिन्यं नद्याः जलं कलुषितम् अकरोत् । नद्यां ये स्नान्ति ते चर्मरोगेण पीडिताः जाताः । श्वासकासादयः रोगाः अपि रामपुरवासिषु प्रवृद्धाः ।

''रमणीयस्य रामपुरस्य का एषा गतिः ? किमर्थम् एवं भवति मातुल ?'' इति अपृच्छत् वीणा ।

''यन्त्रागारस्य मालिन्यं नद्यां त्यज्यते यत् तदेव एतस्य सर्वस्य मूलम् । प्रदूषणं काचित् घोरा समस्या वत्से !'' इति उक्तवान् मातुलः ।

''युक्तम् एतत् । एतस्य निवारणाय किम् उपायः न कोऽपि अस्ति ?'' इति अपृच्छत् वीणा ।

तदा मातुलः अवदत् - ''अस्ति एव । प्लास्टिक्स्यूत-पर्णाविकरादयः मार्गपार्श्वस्थासु कुल्यासु मलिनजलवाहिनीषु च न कदाचिदपि पातनीयाः । यत्र सदा जलं तिष्ठति तत्र किमपि त्याज्यं वस्तु न पातनीयम् । जले त्याज्यवस्तु-पातनं बहूनां रोगाणां कारणं भवति'' इति ।

''मम चिन्तनाय उत्तमः आहारः दत्तः अस्ति भवता । अद्य आरभ्य अहं जलमालिन्यस्य निवारणाय मदीयां चिक्रोडसेवां करिष्यामि'' इति अवदत् वीणा । एवं कथनसमये तस्याः नेत्रे प्रकाशेते स्म ।